मुख ब्रह्मदेव त्यास आहे. अर्थात् ज्यांच्या त्यांच्या योग्यतेनुसार इतरांसही अधिकार आहे. ॥ १५ ॥

**नासतो विद्यते भावो नाभावो विद्यते सतः ॥**
**उभयोरपि दृष्टोऽतस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥**

एतावता देहव्यतिरिक्तात्मा नित्य इत्युक्तं इदानीं नत्वेवाहमित्युक्तं । परब्रह्मणो विष्णोर्नित्यत्वं समर्थयमानः प्रसंगात्प्रकृतेरपि नित्यत्वं समर्थयते । नासतइति । असतः कारणस्याव्यक्तस्य सतो ब्रह्मणश्चाभावो न विद्यते । पृथगभावप्रतिषेध आदरार्थः । सदसतोर्नित्यत्वे प्रमाणमाह । उभयोरिति । निर्णयांतत्वान्निरूपणस्य निर्णय इहांतशब्देनोच्यते । अन्यदर्शनस्यान्यान् प्रत्यप्रत्यायकत्वात् दर्शनमूलः संप्रदाय उपदेशपरंपरारूपोलक्षणयात्र प्रमाणत्वेनोच्यते । अपि शब्दस्य तत्वदर्शिभिरित्यनेन संबंधः । प्रकृतिः पुरुषश्चैव नित्यौ कालश्चसत्तमेत्यादिवाक्येन समुच्चीयते ॥ १६ ॥

अशा पूर्वोक्त ह्मणण्यावरून देहापासून भिन्न असणारा जीव नित्य आहे असें सिद्ध झालें. तसेंच ( नत्वेवाहं ) या श्लोकानें श्रीविष्णूचेंहि परमनित्यत्व सिद्ध झालेंच. पण प्रकृति नित्य किंवा अनित्य, असा संदेह येईल याकरितां श्रीकृष्ण ह्मणतात हे अर्जुना, परमनित्य ईश्वरापेक्षां तदधीनत्व संबंधानें ( परमात्माधीनत्वसंबंधानें ) किंचित् न्यूननित्यत्व असलेली असत्-शब्दवाच्य लक्ष्मी किंवा अपराधीनत्वसंबंधानें नित्यापेक्षां परमश्रेष्ठ असलेलें सत-शब्दवाच्य, अनंतगुणपरिपूर्ण, नारायणाख्य परब्रह्म या उभयतांचा नाश नाहीं असें तत्वदर्शी ब्रह्मज्ञानी निर्णयपूर्वक जाणतात. अथवा ( पापमेवाश्रयेदस्मान् ) या श्लोकांत पूज्य आचार्य किंवा सुहृद्वर्ग यांच्या वधानें होणारें पाप परलोकांत नरकदुःखानुभव देण्यास कारण होईल, असें समजून शोक करणाऱ्या अर्जुनास श्रीकृष्ण ह्मणतात. असत्कर्मापासून सुख नाहीं तसें सत्कर्मापासून दुःख नाहीं. हें विद्वान् लोकांस निश्चितच आहे आणि हें युद्ध तर माझे ठिकाणीं शत्रूप्रमाणें असणाऱ्या लोकांचा संहाररूप असल्यानें तें मला

संतोषकारक पूजारूप सत्कर्मच होय. यांत दुःखकारण असत्कर्म काय आहे वरें? ॥ १६ ॥

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ॥**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥**

न केवलं प्रकृतिपुरुषावेवनित्यौ किंतर्हि देशतोऽपरिच्छिन्नं यद्वेदाकाशादिवस्तु तदपि नित्यमित्याह । अविनाशीति । वेदादेः स्वाभाविकनाशाभावेऽपि केनचिच्छापादिना हेतुना विनाशःस्यादित्यत आह । विनाशमिति । नकेवलमविनाशः किंतु ह्रासोपि नास्तीत्युक्तं । अव्ययस्येति । नासत इत्यादेरपराव्याख्या । ननु पापमेवाश्रयेदस्मानित्यादिना बंधुहननादि परलोकदुःखहेतुतयोक्तमतःशोक इत्यतआह । नासतइति । सदसच्छब्दौ सत्कर्मासत्कर्मवाचकौ । सद्भावेसाधुभावेच सदित्येतत्प्रयुज्यते । प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते इति वक्ष्यमाणत्वात् । भावाभावशब्दौ सुखदुःखवाचिनौ । सद्भाववाचिनः शब्दाः सर्वेतु सुखवाचकाः । अभाववाचिनः शब्दाः सर्वे ते दुःखवाचका इतिवचनात् । यथाचासत्कर्मणः सकाशात्सुखं नास्ति तथा सत्कर्मणः सकाशाद्दुःखं नास्तीति विद्वद्भिर्विनिश्चितं। इदंतु नारायणद्विट्तदनुबंधिनिग्रहरूपत्वात् सत्कर्मेतिभावः ॥ १७ ॥

केवळ परमात्मा तसचि लक्ष्मी किंवा जीव हींच मात्र नित्य असा अर्थ नाहीं. आणखी सर्व देशांत किंवा कालांत व्याप्त असून नित्य अशा आकाश किंवा वेदादि वस्तु आहेत. ज्यांचा स्वभावतः नाश नसून शापादि कारणानेंसुद्धां नाश होत नाहीं. एवढेंच नव्हें तर किंचित् ऱ्हासही होत नाहीं. अथवा अर्जुनास श्रीकृष्णानें आपल्या शत्रूंचा वध माझी पूजारूप सत्कर्म जाणून करावा असें सांगितलें यावरून पूजा ही कनिष्ठानें श्रेष्ठाची करावी असें झालें. (जीवापेक्षां परमात्म्याला श्रेष्ठत्व काय याविषयीं सांगतात.) सर्व देशांत तसेंच भविष्यवर्तमानकालांत किंवा सत्व, रज, तम हेच मुख्य असलेले दुर्गुणरहित करून सच्चिदानंदादि सद्गुणांनीं तीन प्रकारची व्याप्ति आहे ती संपूर्णपणें विष्ण्वाख्य परब्रह्म नारायणाचीच होय. यद्यपि जीवांस नित्यत्व मात्र असलें तरी

संपूर्णपणानें विनाशराहित्य नाहीं. तो विनाश, अनित्यत्व, देहहानि, दुःखप्राप्ति, आणि असंपूर्णता अशा रूपानें चार प्रकारचा आहे. त्यांतील एकही नाश श्रीहरीचेठायीं नाहीं. त्याच्याशिवाय सर्वांस वरील चार नाशांपैकीं कांहीं नाश असल्याशिवाय राहात नाहींत. यावरूनच तो ईश्वर सर्व जीवसमुदायापेक्षां परमश्रेष्ठ असें जाणणाऱ्याचा नाश कोणापासूनही होत नाहीं, हेंच काय तें जीवापेक्षां ईश्वराचें परमश्रेष्ठत्व होय. ॥ १७ ॥

**अंतवंत इमे देहा नित्यस्योक्ताः शरीरिणः**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥**

ननु जीवानामीश्वरप्रतिबिंबत्वस्य रूपंरूपंप्रतिरूपोबभूवेत्यादि प्रमाणसिद्धत्वात्प्रतिबिंबस्योपाधिनाशे नाशनियमात् देहानांचविनाशित्वात्कथं तदुपाधिकानामात्मनां नित्यत्वमुच्यते नित्यत्वेवोपाधिभूतदेहानामपि केषांचिन्नित्यत्वं स्यादित्यत आह । अंतवंतइति । ये देहा अनित्याः न तेषामुपाधित्वं यस्यचोपाधित्वं नासावनित्यइतिभावः । तदिदमुक्तं इमइति । तथाचोक्तं । जीवोपाधिर्द्विधाप्रोक्तः स्वरूपं बाह्य एवच । बाह्योपाधिर्लयंयाति मुक्तावन्यस्यतु स्थितिः । सर्वोपाधिविनाशेहि प्रतिबिंबः कथं भवेत् । कथंचात्मविनाशाय प्रयत्नः सेत्स्यति क्वचिदिति । तथा । उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनेति । नित्यस्य देहस्यापि । अंतवंत इत्युच्यमाने ईश्वरदेहस्याप्यंतवत्त्वं प्रसज्येतेत्यतस्तद्व्यावृत्त्यर्थं शरीरिण इतिविशेषणं । शरीरिशब्दस्य जीवे प्रसिद्धत्वात् । ननुपाधिनाशेन नाशाभावेप्युपाधिबिंबसंनिधिनाशान्निमित्तात्प्रतिबिंबस्यात्मनो नाशो भविष्यति । नचासिद्धिःशंक्यापरिच्छिन्नस्यैव प्रतिबिंबनाशसंभवेन संनिधिनाशध्रौव्यादित्यतउक्तं । अनाशिन इति । तत्र हेतुरप्रमेयस्येति । भेदप्रमितौ समानाधिकरणस्य सारूप्यगमकत्वादप्रमेयेश्वरसरूपत्वं गम्यते । ततो बिंबभूतस्येश्वरस्य सर्वगतत्वात्कथमुपाधिसंनिधिनाशः । नच सर्वगतस्य प्रतिबिंबासंभवः । तदधीनसारूप्यस्य प्रतिबिंबत्वादितिभावः । अतो जीवानां नित्यत्वेनाशो-

च्यत्वात्तद्भयात्स्वधर्मं मात्याक्षीरित्याह । तस्मादिति । एवं युद्धाकरणे कारणं नास्तीत्युक्तं । इदानीं भगवत्पूजात्वेन युद्धं कर्तव्यमिति वक्तुं भगवतो जीवेभ्योतिशयाभावात् किं तत्पूजयेति शंकां परिहरति। अविनाशीति। देशतः कालतश्चैव गुणतश्च त्रिधाततिः। सा समस्ता हरेरेव नह्यन्ये पूर्णसद्गुणा इतिश्रुतेः सर्वप्रकारेण ततं यद्विष्णवाख्यं ब्रह्म तदविनाशि विध्दीति । यद्यपि नित्यत्वं जीवस्याप्यस्ति तथापि सर्वप्रकारेणाविनाशित्वं विष्णोरेवेति तु शब्दः । तदुक्तं। अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा । तदन्येषांतु भावानां नाशाः केचिद्भवंतिहीति । विनाशमित्यादिपूर्ववद्व्याख्येयं । अस्येति विष्णोः परामर्शः । अस्तु हरेः सर्वप्रकारेणाविनाशित्वं तथापि कथं तस्य जीवादतिशय इत्यतआह । अंतवंत इति । इमे देहा इतिविशेषणान्मुक्तदेहस्यापि नित्यचिदानंदरूपत्वमनुज्ञायते । किमुतेश्वरस्य । चिदानंदशरीरेण सर्वे मुक्ता यथा हरिः । भुंजते कामतो भोगांस्तदंतर्बहिरेवचेत्यादिकंच तत्र प्रमाणं। अत ईश्वरः सर्वप्रकारेणाविनाशी । शरीरिणां नित्यत्वमात्रमेवास्ति । नतु सर्वप्रकारेणाविनाशित्वमनिच्छयादेहहान्यादिसद्भावात् । अतोस्ति जीवादीश्वरस्यातिशय इतिभावः । ततः किमित्यत आह । अनाशिन इति । तस्मादीश्वरस्य सर्वप्रकारेणाविनाशित्वेन स्वातंत्र्यात् दुःखनिवृत्तेः सुखस्यचप्राप्तेः तत्प्रसादाधीनत्वादनाशिनः सर्वथानाशरहितस्याप्रमेयस्य देशतः कालतो गुणतश्च परिपूर्णस्य विष्णोः पूजार्थं युध्यस्वेति। अथवा अविनाशित्वित्यनेन भगवतः स्वातंत्र्यसमर्थनेन तत्पूजायाः सत्कर्मत्वं समर्थितं । अंतवंत इति जीवानामनित्यदेहवत्वेनास्वातंत्र्योक्त्या हंतुमसामर्थ्यं समर्थितमिति द्रष्टव्यम् ॥ १८ ॥

शिवाय जीव हा बिंबरूपी ईश्वराचें प्रतिबिंब आहे हें सर्व श्रुतिस्मृत्यादिकांवरून प्रसिद्धच आहे, तर जसें पुरुषाचें आरशांतील प्रतिबिंब उपाधिभूत आरशाचा नाश झाल्यानें नाश पावतें, तसें जीवांच्या प्रतिबिंबाला कारणीभूत जो देह तो अनित्य असून नाश पावत असल्यानें देहाच्या नाशानें जीवहि नष्ट होणें योग्य असून देह मात्र नाश पावतो व जीव नष्ट होत नाहीं हें कसें? प्रतिबिं-

बभूत जीव नित्य असल्यास उपाधिभूत देहहि नित्य ह्मणणें भाग आहे. अशी अर्जुनाच्या मनांतील शंका **श्रीकृष्ण** परिहार करितात. देहधारण करणाऱ्या जीवांना दोन तऱ्हेचे देह असतात. ते असे कीं, एक प्राकृत ( जडदेह ) आणि दुसरा स्वरूपभूत ( ज्ञानदेह ). त्यांत जडदेहाचा नाश झाला तरी बिंबरूप परमात्म्याचे प्रतिबिंब जीव होण्यास कारणीभूत जो जीवाचा चिद्रूप देह तो नित्य असल्यानें प्रतिबिंबाचा नाश होण्याचें कारण नाहीं. पुनः अशी शंका येते कीं, चिद्रूप देहाला नाश नसल्यानें जीवाला नाश नसला तरी बिंबरूपी परमात्म्याचें सान्निध्य नसल्यानें किंवा बिंबरूपी परमात्म्याचा नाश झाल्यानें प्रतिबिंबरूप जीवाचा नाश कां होऊं नये ? अशी शंका येईल. परंतु सर्वत्र व्याप्त अशा बिंबरूपी परमात्म्याचें सान्निध्य जीवाच्या चिद्रूपास कधींही जात नाहीं व नित्य ईश्वराचा नाश नसल्यामुळें प्रतिबिंबरूप जीवाचाही नाश होत नाहीं. हे भरतकुलोत्पन्ना **अर्जुना**, या सर्व कारणांनीं जीवाचें नित्यत्व सिद्ध झाल्यानें त्याचा नाश होईल अशा हेतूनें तूं युद्धाविषयीं पराङ्मुख होऊं नको तर युद्धाकरितां सिद्ध हो. ॥ १८ ॥

**य एनं वेत्ति हंतारं यश्चैनं मन्यते हतम् ॥**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥**

ननु यदि जीवानां नित्यत्वमीश्वरस्य च स्वतंत्रत्वं तर्ह्ययमस्य-हंता अयमनेन हतः इति प्रतिपत्तिः कीदृशीत्याशंक्य भ्रांतिरित्याह । य एनमिति । य एनं जीवं स्वातंत्र्येण हंतारं पश्यति । तथैनं जीव-मीश्वरं वा चेतनस्यहंतारं पश्यति । यश्चैनं जीवं हतं मन्यते तावुभौ न विजानीतः । अज्ञानिनौ । यतश्चित्प्रतिबिंबोऽतः स्वातंत्र्याभावान्नायं-जीवो हंति नित्यत्वान्नहन्यते च । एतज्ज्ञानादेव जीवानां प्रायश्चित्ता-दिभागित्वमिति ॥ १९ ॥

( जीवाचे ठिकाणीं नित्यत्व व ईश्वराचे ठिकाणीं स्वातंत्र्य असल्यानें हा जीव दुसऱ्याचा संहार करितो, असें ह्मणण्यास कारण काय याविषयीं कृष्ण सांगतात. ) आपण त्या जीवाला स्वातंत्र्यानें मारूं असें ह्मणणारे मनुष्य अज्ञानी असें समजलें पाहिजे. जीव संहार करून घेतो असें समजणें

ही भ्रांतीच आहे. कारण जीव नित्य ठरल्यानें व अस्वतंत्र असल्यामुळें दुसऱ्याचा संहार करण्यास किंवा दुसऱ्याकडून संहार करून घेण्यास शक्य नाहीं. जीव संहार करितो अथवा संहार करून घेतो हे ह्मणणें भ्रांतीचें आहे. याबद्दल श्रुतिसंमतीहि आहे. ॥ १९ ॥

न जायते म्रियते वा कदाचि-
न्नायं भूत्वाभविता वा न भूयः ॥
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥

उक्तार्थे प्रमाणत्वेन मंत्रवर्णमुदाहरति । न जायते इति । नञा-द्वितीयस्य म्रियतइत्यनेनसंबंधः । अयं संसारी स्वरूपेण न जायते न म्रियतेच । ज्ञानीच देहेनापि न जायते न म्रियते च । अभिमाना-भावेन देहसंबंधाभावात् ननु जीवो न जायतेचेत्तर्हि यथेश्वरस्य ज्ञानं वृद्धिऱ्हासादिवर्जितं भूत्वैव कयाचिदचिंत्यया शक्त्या पुनर्भूत-मिति व्यवहारालंबनं तदैक्षतेत्यादिश्रुतेः । देशतः कालतो योसावव-स्थातः स्वतोऽन्यतः । अविलुप्तावबोधात्मा स युज्येताजयाकथमिति भागवतस्मृतेश्च । तथा जीवेऽपि जननव्यवहारे निमित्तं इत्यतआह । अयमिति । कुतो न जायते न म्रियते कुतो नेश्वरज्ञानसाम्याभाव इत्यतआह । अजइति । अजादिलक्षणेश्वरसरूपत्वादित्यर्थः । अजो नित्य इत्याभ्यां बिंबोत्पत्तिनाशनिमित्तौ शाश्वतः सदैकरूप इत्यनेनो-पाधिबिंबसंनिधिजनननाशनिमित्तौ च जन्मनाशौ नस्तः । प्रतिबिंबत्वा-देव बिंबसर्वसाम्याभाव इत्युक्तं भवति । तर्हि जननव्यवहारे किंनि-मित्तमित्याशंक्य देहांतरप्राप्तिर्निमित्तमित्याह । पुराण इति । पुराणि देहानणति गच्छतीति पुराणः एवं तर्ह्युपाधिभूतदेहनाशाद्दर्पणनाशा-त्प्रतिबिंबनाशवदात्मनाशः स्यादित्यतआह । न हन्यतइति । अथवा अयं ना परमपुरुषः स्वरूपेण न जायते न म्रियते देहं न जहाति । वाशब्दात् पूर्वनञोऽनुकर्षः । भूत्वा विद्यमान एव भूयः पुनर्देहसंबंध-

रूपेणापि न भविता देहनाशाभावे स्वरूपनाशाभावः कैमुत्येनैव सिद्ध इति नोक्तः देहवियोगस्यैव मरणत्वेन प्रसिद्धेर्घटादिनाशे मरणव्यवहाराभावान्न म्रियते इत्युक्त्या स्वरूपानाश उच्यते । अयं जीवोप्यजो नित्यश्चेत्कथं तर्हि ईश्वराद्विशेष इत्यत उक्तं । शाश्वत इत्यादि । शाश्वतो न कदाचिदस्वातंत्र्यादिकं जीवरूपं जहाति । उक्तंच । अल्पशक्तिरसार्वज्ञं पारतंत्र्यमपूर्णता । उपजीवकत्वंजीवत्वमीशत्वं तद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा स्यात्कथंचन । वदंति शाश्वतावेतावतएव महाजना इति । पुराण्यणतीति पुराणः । एतावांस्तुगुण इत्याह । नहन्यत इति । शरीरे हन्यमाने । स्वयं न हन्यत इत्येतावान् नतु स्वातंत्र्यादिपरमात्मधर्मवानिति ॥ २० ॥

पहा कीं, जननमरणरूप संसारांत पुनः पुनः येणाऱ्या प्राण्यांच्या चिद्रूप शरीरास उत्पत्ति किंवा नाश नाहीं. तसें ब्रह्मज्ञानी अशा सिद्ध पुरुषांस प्राकृत देहाभिमान नसल्यानें त्या देहाची उत्पत्ति अगर नाश झाला तरी त्यापासून होणाऱ्या सुखदुःखानुभवसंबंधानें ते असंग असतात. ( खरोखर जीवाला उत्पत्ति किंवा विनाश जर नसता तर जसें देशतः, कालतः, स्वतः, अथवा परतःज्याच्या अमित सत्ज्ञानाला लोप नाहीं अशा विज्ञानमूर्ति श्रीहरीच्या ज्ञानाला '**अभूत्वाभवन**' ( होत नसतां होणें ) अशा तऱ्हेच्या विचित्र शक्तींनीं उत्पत्ति 'तदैक्षत' इत्यादि श्रुति वगैरेंत सांगितली आहे, तशी जीवालाहि उत्पत्ति विनाश नसून तो जीव झाला किंवा मेला असा व्यवहार घडण्याला विशेष कारण आहे काय ? अशा शंकेच्या निवृत्त्यर्थ, ती परमात्मज्ञानाची 'अभूत्वाभवन' शक्ति जीवास नाहीं असें ( नायंभूत्वाभविता ) या वाक्यशेषानें सांगितलें आहे. ) असें आहे तर तो जीवगण कोणत्या कारणानें उत्पत्तिविनाशशून्य आहे आणि त्याला परमात्म्यासारखी विचित्र शक्ति कां नाहीं ? याचें उत्तर असें आहे कीं, बिंबभूत परमात्म्याला उत्पत्तिविनाश नसल्यानें प्रतिबिंबभूत जीवगणालाहि उत्पत्तिविनाश नाहीं. तसेंच बिंबरूप परमात्मा सर्वदा एक प्रकारें व्याप्त असल्यानें, प्रतिबिंबोत्पत्तीस कारणीभूत अशा आरशाप्रमाणें असलेलें जीवाचिद्रूपाचें सामीप्य सर्वकाळ असल्यावरून प्रतिबिंबभूत जीवगणाचा नाश कदापि होत नाहीं. जीवसमुदायास उत्पत्ति व नाश

आहे असा लौकिक व्यवहार घडण्यास कारण जीवांशीं होणारा जडदेहाचा संबंध किंवा वियोग हा होय. यावरून जडदेहाहून जीवचिद्रूप देह अन्य असल्यानें जडदेहाचा नाश झाला तरी जीव चिद्रूपाचा नाश संभवत नाहीं. श्रीहरीला प्राकृत देहसंबंधवियोगरूप जननमरणें केव्हांहि होत नसल्यानें स्वरूपनाश होत नाहीं हें निराळें सांगावयास नको. असें आहे तर रामकृष्णादि अभिन्नांशरूप अवतार कसे झाले अशी शंका कोणासहि येणार. याविषयीं श्रुतिस्मृत्यादिकांत असा उघड अभिप्राय दिसतो कीं, त्या त्या अवताररूपानें स्वतः परमात्मा तत्तत्तारतम्यानुसार भक्तजनांस दृग्विषय मात्र झाले. त्यावरून शुक्लशोणितसंबंधजनित गर्भवास व देहधारणादि दुःखें त्या ईश्वरास कदापि नाहींत. याशिवाय अशेषगुणपरिपूर्ण, सर्वज्ञ, स्वातंत्र्यादिगुणमंडित अशा परमात्म्याला अल्पज्ञत्व, दुःखित्व, अस्वातंत्र्य, अल्पशक्तित्व, उपजीवकत्वसंबंधानें तदधीनत्वादिगुणविशिष्ट जीवगणासारखा, प्राकृतशरीरप्राप्तिवियोग हीं त्या सच्चिदानंदकंदमूर्ति श्रीनारायणाचे ठिकाणीं कोण सांगेल. ती परमात्म्याची विचित्र शक्ति यावज्जीवगणाला न येण्यास हेंच कारण मुख्य होय. ॥ २० ॥

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ॥**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥**

जीवस्यानित्यत्वादिकं मन्यमानो न ज्ञानीत्युक्तं । इदानीं ज्ञानी तु नैवं मन्यत इत्याह । वेदेति । अविनाशिनं नैमित्तिकनाशरहितं । नित्यं स्वाभाविकनाशरहितं । अथवा । अविनाशिनं दोषयोगरहितं । दोषयुक्तपुरुषादिषु नष्टशब्दप्रयोगात् । यथा भीष्मादिचेतनानां नित्यत्वान्न त्वया हननं घातनं वा क्रियते तद्वत्तेषामदोषयोगित्वान्न त्वया दोषयोगः क्रियते कार्यतेच । नित्यं सदाभाविनं । अजमुत्पत्तिवर्जितं अव्ययं स्वरूपविकारशून्यं एनं जीवमेवं यो वेद तथाऽविनाशिनं शरीरापायादिवर्जितं । नित्यं स्वरूपतः एनमजादिरूपं स्वतंत्रं विष्णुं यो वेद स कथं घातयति हंति वा जीवानां नित्यत्वादस्वतंत्रत्वादेनं घातयामि हन्मिचेतिभावं न करोतीत्यर्थः ॥ २१ ॥

जीवांस परमनित्यत्व किंवा स्वातंत्र्य, अप्राकृत देह किंवा देहवियोग

नाहीं असें समजणारा ज्ञानी नव्हे असें सांगून ज्ञानी तसें जाणत नाहीं याब-द्दल सांगतातः– हे अर्जुना, हा जीव बिंबनाशराहित्यनिमित्तानें निरंतर उत्पत्तिरहित ( स्वरूपविकार नसलेला ) आणि हा परमात्मा देहानें आणि स्वरूपानें नित्य असून नाशरहित आहे. याप्रमाणें स्वतंत्र असणाऱ्या परमात्म्यास जो जाणतो, तसाच जीव नित्य परतंत्र आहे, असें जो जाणेल तोच ज्ञानी ह्मणून समजावा. असा ज्ञानी पुरुष आपण दुसऱ्यास मारीन अगर दुसऱ्या-कडून मारला जाईन असें समजणार नाहीं. ॥ २१ ॥

**वासांसि जीर्णानि यथा विहाय**
**नवानि गृण्हाति नरोऽपराणि ॥**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही ॥ २२ ॥**

**जीवो नित्यस्य देहवियोगौच कौमारादिवदित्युक्तं तत्र कौमा-रादिदेहानामनतिभिन्नत्वान्न ते न देहात्मनोर्विवेकः विनाशित्वा-विनाशित्वलक्षणः स्फुटो अनुभवारूढो भवतीति देहात्मविवेकानुभवं दृष्टांतेनोपपादयति । वासांसीति । अथवा वाससो जरावत्स्वशरीरे जरादावस्वातंत्र्यदर्शनात् सर्वत्रास्वातंत्र्यं जीवस्य ज्ञातव्यमित्यने-नोच्यते ॥ २२ ॥**

जीव चित्स्वरूपानें नित्य आहे. त्यास देहप्राप्ति किंवा देहवियोग बाल्य किंवा यौवनादि अवस्थेप्रमाणें आहे ह्मणून सांगितलें. तरी बाल्यदेह किंवा यौवनदेह अत्यंत निराळे नसल्यानें जीव हा देहापासून निराळा स्पष्ट दिसत नाहीं. त्यामुळें वरील कौमारादि दृष्टांतानें जीवास चिद्रूपानें नित्यत्व, प्राकृत-देहास नाशलक्षणरूप अनित्यत्व हीं स्पष्ट दिसत नाहींत. ह्मणून त्याविषयीं स्पष्ट दृष्टांत सांगतातः– जसें चिद्रूपी जीवाच्या प्राकृत देहाला कौमाराद्यवस्था जीवानें अनिच्छित असल्या तरी, भगवदिच्छेनें होत आहेत. त्याप्रमाणें अस्वतंत्र जीवाला त्या परमेश्वराच्याच इच्छेनें प्राकृत देहसंयोग किंवा वियोग घडून येतात. मनुष्य जसा जुनीं वस्त्रें टाकून नवीं वस्त्रें परिधान करितो,

त्याप्रमाणें जीव हा जीर्ण झालेलें शरीर टाकून नूतन शरीर धारण करितो. वस्त्रास जसा नाश आहे तसा शरीरासहि नाश आहे. यावरून जीव अस्वतंत्र आहे हें सिद्ध होतें. ॥ २२ ॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयंत्यापो न शोषयति मारुतः ॥ २३ ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥

ननु दक्षस्य शिरच्छेदो न स्वतो जातो नापि वीरभद्रस्याबुधेन निमित्तेन किंतु यज्ञे पशुभावनाख्येन निमित्तविशेषेण तथा स्वतः प्रायो निमित्तैश्चाविनाशिनोपि केनचिन्निमित्तविशेषेण नाशः स्यादित्यतो विशिष्टनिमित्तानि निषेधति । नैनमिति ।। २३ ॥ लट्प्रयोगेन वर्तमानस्यैव छेदादेर्निषेधात् इदानीं दृश्यमानत्वादात्मनः प्राग्विनाशाभावेप्युत्तरत्रशस्त्रादिना विनाशः स्यादित्यतोर्हार्थककृत्प्रत्ययप्रयोगेन छेदादियोग्यतैवात्मनो नास्तीत्याह । अच्छेद्यइति । प्रवृत्तेशस्त्रसंपातइतिवचनात् प्रसक्तौसत्यामपि वर्तमानस्य छेदादेरदर्शनाच्छेदाद्ययोग्यत्वमात्मनो युक्तमिति पूर्वश्लोकेन दर्शयति । ननु वर्तमानछेदाद्यदर्शनमात्मनः छेदाद्ययोग्यतायां न निश्चायकं पूर्वं कदाप्यदृष्टस्यापि पश्चादृर्शनात् । नच संभावनामात्रेण निश्चय इत्यतो नित्यसर्वगतत्वादिविशेषणेश्वरसरूपत्वं निश्चायकं प्रतिबिंबे बिंबधर्मसमानधर्माणां अविरुद्धानां संभवादित्याह । नित्यइति । पुनरुक्तिप्रसंगात्सामर्थ्याद्भिन्नपदोपात्तमपि नित्यत्वं सर्वगतत्वविशेषणं नित्यं सर्वेषु शस्त्रपावकादिषु स्थितः सर्वगतः । स्थाणुः नैमित्तिकविकाररहितः । अनाद्यनंतशक्तित्वादचलत्वादिबिंबधर्मसाकल्याभावेप्यविरुद्धधर्मांतरस्वीकाराय पुनःपुनः प्रतिबिंबोक्तिः । तस्मादीश्वरप्रतिबिंबत्वान्नित्यत्वेनात्मानं विदित्वा नानुशोचितुमर्हसि । अथवा ईश्वरदेहस्यापि छेदाद्यभावः स्वदेहस्य साक्षादेव दर्शयितुं शक्यत इति वर्तमानापदेशः । सद्देहःसुखगंधश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः सविष्णुः

परमोक्षर इति च श्रुतिः। अछेद्यत्वादिकं जीवस्यापि सममित्याह। अच्छेद्योयमिति। नन्वछेद्यत्वादिसाम्येन जीवस्यापि स्वातंत्र्यं स्यादित्यत आह। नित्यइति। नित्यं सर्वगते विष्णौ स्थितोणुश्चेति तथा विष्णवधीन इत्यर्थः। विष्णवधीनत्वस्य कदाचिन्नाशे पुनरपि साम्यमित्यत आह। अचलइति। हेतुतोपि तत्स्थत्वान्नचलतीत्यर्थः। जीवस्यास्वातंत्र्ये हेत्वंतरमाह। सनातनइति। नादेन शब्देन सह वर्ततइति सनादःसनादएव सनातनः। विधिनिषेधशास्त्रबद्धइतियावत्। उक्तंच। नित्यं सर्वगते विष्णावणुर्जीवो व्यवस्थितः। नचास्यतदधीनत्वं हेतुतोपि विचाल्यते। निषेधविधिपात्रत्वात्सनातन इतिस्मृत इति च ॥२४॥

तसेंच चिद्रूपी नित्य जीवाला बहुतकरून स्वतः नाश होण्याचें कारण नसलें तरी, ज्याप्रमाणें " पूर्वी दक्षप्रजापतीचा शिरच्छेद होण्यास स्वतः दक्ष अगर वीरभद्राचें जडभूत आयुध कारण नसलें तरी रुद्रास हविर्भाग नसलेल्या यज्ञांत वधयोग्य पशू कारण होय, अशा विशेष निमित्तानें दक्षाचा वध वीरभद्रानें केला आहे;" त्याप्रमाणें कोण त्याहि विशेष कारणानें चिद्रूपीजीवाचा वध कां होऊं नये अशाबद्दल सांगतातः—या चिद्रूपीजीवाला शस्त्रें कापीत नाहींत, अग्नि जाळीत नाहीं, उदक भिजवीत नाहीं आणि वायु सुकवीत नाहीं. ॥ २३ ॥ या जीवास वर्तमानकाळीं नाश नसला तरी पुढें नाश होईल अशी शंका येईल ह्मणून तिचें निवारण करितात. किंवा परमात्म्याचा सच्चिदानंदात्मक देह जीवांच्या प्राकृत देहाप्रमाणें नष्ट होतो कीं काय अशी अज्ञजनांस शंका येईल ह्मणून सद्देह, सुखगंध, ज्ञानप्रकाश, सत्पराक्रम अशा अक्षररूपी विश्वनियंत्या ईश्वराच्या देहाचा नाश कालत्रयींहि होत नाहीं अशा हेतूनें सांगतातः—जीव कापला जाणार नाहीं, जाळला जाणार नाहीं, मऊ केला जाणार नाहीं, आणि सुकविला जाणार नाहीं. सर्वदा सर्व वस्तूंमध्यें असणारा परमात्मा कोणासहि पूर्णपणें ज्ञानविषय नसला तरी त्याचा प्रतिबिंबभूत असा जीव ज्ञानीजनास दिसला तरी तो जीव सर्वव्यापी ईश्वराचें प्रतिबिंबच होय. यावरून जीव हा छेदरहित परमात्म्याचा प्रतिबिंब असल्यानें हा जीव छेदादि करण्यास अयोग्य आहे असें समजून तूं दुःख करण्याचें सोडून दे. ॥ २४ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

नन्वणोर्जीवस्याधारः परमात्मा सर्वगतश्चेत्किमिति तथा न दृश्यत इत्यत आह । अव्यक्त इति । कथमेतद्युज्यते अचिंत्यशक्तित्वात् नच सा शक्तिः कदाचिदन्यथा भवति अविकार्यत्वात् । यानियान्यस्य रूपाणि तानि सर्वाण्येवंभूतानीति दर्शयितुमेनमयमित्यादिपृथग्वचनं । तदुक्तं । प्रादुर्भावादिरूपेषु मूलरूपेषु सर्वशः । न विशेषोस्ति सामर्थ्ये गुणेष्वपि कदाचनेति । जीवेतु सर्वजीवेष्वनुगमार्थं पृथग्वचनं । एवमव्यक्ताचिंत्यादिरूपेण ज्ञातः परमेश्वरः सर्वदुःखनाशं करोतीति नानुशोचितुमर्हसि ॥ २५ ॥

अणुपरिमाणयुक्त जीवास आधारभूत असणारा असा परमात्मा सर्व व्याप्त आहे तर तो परमात्मा दृष्टिगोचर कां होत नाहीं याविषयीं सांगतातः— हे अर्जुना, परमात्मा दृष्टिगोचर नसून, लोकांस चिंतन करण्यास अशक्य आहे व विकाररहितहि आहे, हें स्पष्ट आहे. व अशा प्रकारचें ईश्वराचें ज्ञान असून व त्या ईश्वरापासूनच सर्व दुःखांचा नाश होणार असें माहीत असल्या-मुळें तुझ्यासारख्यानें शोक करणें योग्य नव्हे. जीव नित्य आहे तरी तो देहसंबंधरूप जन्म पावत असल्यानें व देहवियोगरूप मरण पावत असल्यानें तन्निमित्त दुःख माझ्या बांधवांस होईल असें समजून तूं शोक करीत असल्यास ती शंका निवारणार्थ सांगतों. ॥ २५ ॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ॥
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६ ॥

अस्त्वेवमात्मनो नित्यत्वं तथापि देहसंयोगवियोगात्मकजनिमृती-स्तएव तन्निमित्तंच दुःखं मदीयानां भविष्यतीति मे शोक इत्यत आह । अथचेति । नित्यं सनातनं प्रोक्तं नित्यं नियतमेवचेत्यभिधानात् । अत्र नित्यशब्देन नियतं गृह्यते । जातस्यहि ध्रुव इति प्रकाशनात् ।

यदि यावन्मोक्षं जीवस्य जन्ममरणे नियते इति स्वयमेव मन्यसे तथापि तावन्मात्रेणापि ज्ञानेन शोचितुं नार्हसि ॥ २६ ॥

हे अर्जुना, जीव हा नित्य असून प्राकृतदेहसंबंधानें जनन पावतो, तसेंच तो जीवदेह वियोगरूप मरण पावतो, असें तूं जाणतोस ना? व असें जाणत असशील तर त्या जीवांना नियमानें होणाऱ्या जननमरणाविषयीं शोक करणें तुला योग्य नाहीं. ॥ २६ ॥

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥**

कुतोऽशोक इत्यतो नियतत्वादित्याह । जातस्येति ॥ २७ ॥

हे अर्जुना, ज्या जीवाला प्राकृतदेहसंबंधरूप जनन आहे, त्याला तद्वियोगरूप मरणहि निश्चित आहेच. कोणत्याहि प्रयत्नानें जर तें चुकवितां येत नाहीं तर त्याविषयीं दुःख करण्यास तूं कसा योग्य होसील बरें? ॥ २७ ॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

एतदेव जन्ममरणस्वरूपनिरूपणेन स्पष्टयति । अव्यक्तादीनीति । अव्यक्तं प्रधानमादिरुत्पत्तेः पूर्वं रूपं येषां तानि अव्यक्तादीनि । भूतानि शरीराणि । व्यक्तमभिव्यक्तं मध्यं जन्ममरणांतरालस्थितिलक्षणं येषां तानि । अव्यक्ते निधनं लयो येषां तानीमान्येवंभूतान्येव तत्र तेषु का परिदेवना । कःशोकनिमित्तः प्रलापः । अथवा अव्यक्तमदर्शनमादिः प्रादुर्भावावधिर्येषां व्यक्तं दर्शनं मध्यस्थितिर्येषां तानीत्यादि व्याख्येयं । तदुक्तं । अदर्शनादिहायातः पुनश्चादर्शनं गतः । त्वंचाहंचापि राजेंद्रततः किमनुशोचसीति ॥ २८ ॥

जनन किंवा मरण ह्मणजे काय हें स्पष्ट समजल्यास शोक करण्याचें कारण राहणार नाहीं. याकरितां जननमरणाचीं लक्षणें सांगतों—हे अर्जुना, हे सर्व प्राणी प्रकृतिजन्यदेहसंबंधानें जन्म पावणारे, तसेंच त्या देहवियोगानें मरण पावणारे आहेत. शिवाय मध्यंतरीं संसारांत उत्पन्न होणारीं सुखदुःखेंहि देहसंबंधानेंच होतात. मग अशाविषयीं शोक कशाला? ॥ २८ ॥

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९ ॥

देहयोगवियोगयोर्नित्यत्वादात्मनश्चेश्वरप्रतिबिंबत्वात् सर्वथा नाशाभावान्नशोकःकार्यइत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति । आश्चर्यवदिति । एनं जीवं यःकश्चित्पश्यति सःआश्चर्यवत् दुर्लभ इत्यर्थः एवमाश्चर्यवद्वदतीत्यादि योज्यं । सर्वेषामप्यात्मदर्शनादिमत्वात्कथमस्य दर्शनादिमान्दुर्लभ इत्यत उक्तम् । श्रुत्वेति । उक्तादृष्ट्वा चेत्यपि ग्राह्यं । तथाच सर्वेषां सामान्यतो दर्शनादौ सत्यपि सम्यग्ज्ञानाभावात्तद्दर्शनादिमान्दुर्लभ इति भावः ॥ २९ ॥

जीवास प्राकृत देहाचा योग व वियोग हे नियमानें आहेतच. परंतु जीव हा परम नित्य ईश्वराचा प्रतिबिंब असल्यानें त्यास कदापि नाश नाहीं. यास्तव शोक करूं नये असें बोलून बिंबभूत ईश्वरीय सामर्थ्य सांगण्याविषयीं प्रथमतः तत्प्रतिबिंबभूत जीवगणाचें सामर्थ्य वर्णन करितात. या जीवास पाहणारा किंवा वर्णन करणारा आणि याचे गुण श्रवण करणारा दुर्लभ जाणावा. यद्यपि श्रवणादि केलें तरी ज्याचें स्वरूपज्ञान साकल्यानें कोणासही होत नाहीं, ज्या आनंदरूपी परमात्म्याचा प्रतिबिंबभूत जीव झाल्यानेंच ह्या तऱ्हेचे चमत्कार त्या जीवाचे अंगीं आहेत ते काय वर्णावे? ज्या परमात्म्याची अपरिमित शक्ति, जो सर्व जीवांना आश्चर्यवंत किंवा सुज्ञानी करण्यास कारणीभूत, तोच परमात्मा असदृश, आश्चर्यवंत किंवा परमनित्य ज्ञानी होय. याविरुद्ध जाणणें हें नित्य दुःखानुभवास योग्य अशा असुरसमुदायावांचून इतरांस होणार नाहीं.

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥

यदेतज्जीवनित्यत्वमुक्तं तदपीश्वराधीनं यत्प्रतिबिंबदर्शनादि-मान्दुर्लभः किं तत्सामर्थ्यं वर्णनीयमिति ईश्वरसामर्थ्यं दर्शितम् । इदानीमुपसंहरति । देहीति । अथवा अथचैनमित्यादिना जीवस्या-स्वातंत्र्यमुपपादयितुं जननियमवत्वमुच्यते । तस्मान्न जीवआश्चर्यभूतः किंतर्हि भगवानेवेत्याह । आश्चर्यवदिति । आश्चर्यमेव संतमेनमाश्चर्य-वत्पश्यति । नपुनरनाश्चर्यं । गगनं गगनाकारं सागरं सागरोपम इत्या-दिवत् । उक्तंच । आश्चर्यो भगवान् विष्णुर्यस्मान्नैतादृशः क्वचित् । तस्मात्त-द्गोचरं ज्ञानं तद्गोचरवदेवत्विति । अनाश्चर्यवदसुरादयः पश्यंतीति कश्चि-दिति विशेषणम् । न स्वसामर्थ्यायत्तमित्याह । देहीति । देही नित्यमवध्यः यतोयमीश्वरः सर्वस्य जीवस्य सूक्ष्मे स्थूलेच देहे रक्षकत्वेनावस्थितः । तदुक्तं भागवते । द्रव्यं कर्मच कालश्च स्वभावो जीव एवच । यदनु-ग्रहतः सन्ति न संति यदुपेक्षयेति ॥ ३० ॥

यापूर्वीं जीवास चिद्रूपानें जें नित्यत्व सांगितलें आहे तें परमनित्य ईश्वराधीन आहे असें सांगतातः—या स्थूल, सूक्ष्म देहांत अभिमानसंबंधानें असलेला जीव हा वध करण्यास अशक्य आहे. कारण त्या जीवाच्या रक्षणा-विषयीं परमात्मा असंग राहून आपल्या अभिन्न अंशानें अनेक रूपें घेऊन त्या त्या ठिकाणीं त्या जीवाचें रक्षण करितो. जर त्या ईश्वराकडून उपेक्षा होईल तर द्रव्य, कर्म, काळ, स्वभाव, जीव हे कधींहि असूं शकणार नाहींत. याकरितां तुला या अशा जीवाबद्दल शोक करणें योग्य नव्हे. ॥ ३० ॥

**स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥३१॥**

न केवलमात्मनो नित्यत्वादशोकः किंतर्हि इत्यत आह । स्वधर्म-मिति । धर्मादनपेतात् न्यायप्रवृत्ताद्युध्दादन्यच्छ्रेयः क्षत्रियस्य नास्ति । ३१ ।

शिवाय जीव नित्य आहे ह्या एकाच कारणावरून शोक करूं नये एवढेंच नाहीं तर शोक न करण्यास दुसरेंही कारण आहे. याविषयीं सांगतातः—हे अर्जुना, तूं क्षत्रियकुळोत्पन्न असल्यामुळें स्वधर्मास उचित अशा शत्रुसंहारा-

विषयीं भिऊन थरथरां कापणें तुला योग्य नव्हे. क्षत्रियांस धर्मसाधनभूत युद्धावांचून श्रेयस्कर व श्रेष्ठ असें दुसरें साधन नाहीं. ॥ ३१ ॥

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ लभंते युद्धमीदृशम् ॥ ३२ ॥**

किंच स्वयमेव महति श्रेयसि प्राप्ते विलंबोनुचित इत्याह । यदृच्छयेति । अयत्नोपपन्नमिदं निरतिशयसुखोपायभूतमपगताविघ्नावरणमीदृशं युद्धं सुखिनः पुण्यवंतः क्षत्रिया लभंते ॥ ३२ ॥

अनायासानें प्राप्त झालेलें युद्धरूप श्रेय संपादण्याविषयीं उपेक्षा करणें योग्य नव्हे याविषयीं सांगतातः—अर्जुना, अनायासें भगवदिच्छेनें प्राप्त झालेला वीरस्वर्गरूप, अनुपम सुखाला कारणीभूत, प्रतिबिंबरहित केवळ स्वर्गद्वारसमान अशातऱ्हेचा असणारा युद्धप्रसंग स्वर्गसुख भोगण्यासाठीं क्षत्रियासच प्राप्त होतो. ॥ ३२ ॥

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥३३॥**

युद्धाकरणे दोषमाह । अथचेदिति ॥ ३३ ॥

क्षत्रिय असून युद्ध करीत नसल्यास उलट तो दोषीहि होतो अशा हेतूनें बोलतातः—क्षत्रियास पुण्यसाधनभूत असें हें युद्ध न करशील तर वडिलोपार्जित विमल कीर्तीला मुकून उलट पाप पावशील. ॥ ३३ ॥

**अकीर्तिं चापि भूतानि कथयिष्यंति तेऽव्ययाम् ।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥**

न केवलं धर्मादिहानिः पापावाप्तिश्च किंतर्हीत्यत आह । अकीर्तिं-चेति । अव्ययां शाश्वतीम् । ततः किमित्यत आह । संभावितस्येति । बहुमतस्य अधिका भवति ॥ ३४ ॥

कारण क्षत्रियोचित युद्ध न केल्यानें केवळ धर्मादि हानि किंवा पापप्राप्ति होते इतकेंच नव्हे तर दुर्धर अशी अपकीर्ति प्राप्त होईल. ती अशी

कीं, लोक सर्व जगभर तुझी अपकीर्ति गातील. प्रतिष्ठित मनुष्यास अपकीर्ति ही मरणापेक्षांहि दुःखकारक आहे. ॥ ३५ ॥

**भयाद्रणादुपरतं मंस्यंते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥**

बंधुस्नेहात्कारुण्याच्च युद्धान्निवृत्तस्य शूरस्याकीर्तिः कथमागमिष्यतीत्यत आह । भयादिति । येषां पूर्वं बहुगुणत्वेन संमतोभूः तएव संग्रामात्वां भयान्निवृत्तं मन्येरन् । ततश्च पूर्वं बहुमतो भूत्वा लाघवं यास्यसि ॥ ३५ ॥

बंधुस्नेहनिमित्तानें मी युद्धापासून निवृत्त झाल्यास मला ती अपकीर्ति कशी लागेल, अशा शंकेच्या निवृत्त्यर्थ म्हणतातः—शत्रुपक्षीय सर्व महारथिक तूं या रणांगणांतून भिऊनच पळालास असें म्हणतील, आणि जे तुला आजपर्यंत बहुमान देत होते तेच तुला अगदीं तुच्छ मानतील. ३५

**अवाच्यवादांश्चं बहून्वदिष्यंति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६॥**

किंच । अवाच्यवादान् वचनानर्हानहिताः शत्रवो वदिष्यंति ॥३६॥

एवढेंच नव्हे तर अयशस्कर अशीं पुष्कळ प्रकारचीं दुर्वचनेंहि श्रवण करण्याचें तुला भाग पडून महत्तर दुःख प्राप्त होईल. तें असें—तुझे शत्रू जे दुर्योधनादिक ते तुझ्या सामर्थ्याची निंदा करून, बोलण्यास अयोग्य अशींहि वचनें बोलतील. यापेक्षां अधिक दुःख तें कोणतें ? ॥ ३६ ॥

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

यच्चोक्तं जयश्च संदिग्ध इति तत्र पक्षद्वयेपि न हानिरित्याह । हतइति । जित्वा महीं स्वर्गंच भोक्ष्यसे । ये युध्यंते प्रधनेषु इति ऋग्वेदे ॥ ३७ ॥

' या युद्धांत माझा जय होईल किंवा पराजय होईल याबद्दल मला

संशयच आहे' असें जें अर्जुन पूर्वी बोलला होता त्याबद्दल ह्मणतातः— शत्रूंनीं तुला युद्धांत मारलें तर तुला वीरस्वर्गसुख मिळेल. तूं त्यांस जिंकिलेंस तर तुला इहलोकांत राज्यसुखानुभव मिळून अंतीं स्वर्गसुखहि मिळेल. याकरितां हे कुंतीपुत्रा, युद्ध करण्याचा निश्चय करून युद्धास उभा रहा. ॥ ३७ ॥

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

मुमुक्षोर्युध्दानुष्ठानप्रकारमाह । सुखदुःखे इति । द्वंद्वसहिष्णुः सन् युध्दाय यतस्व । एवंसति पापं पापफलं संसारदुःखं नावाप्स्यसि ॥ ३८ ॥

भगवदर्पणबुद्धीनें युद्ध करून क्षत्रियांनीं मुक्त होण्याचा प्रकार सांगतातः— सुखदुःख, लाभालाभ, जयापजय इत्यादि द्वंद्वजनित फलाविषयीं निरिच्छ राहून तूं युद्ध करण्यास सिद्ध हो. ह्मणजे पापफलरूप संसारदुःख तुला प्राप्त होणार नाहीं. ॥ ३८ ॥

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबंधं प्रहास्यसि ॥ ३९ ॥**

उपदिष्टज्ञानयोगोपसंहारपूर्वकं तदुपायं फलवत्कर्मसमाधियोगं वक्तुं प्रतिजानीते । एषेति । सम्यक् ख्यातिर्ज्ञानं सांख्यं युज्यतेऽनेनेतियोगस्तदुपायः । सम्यक्तत्वदृशिः सांख्यं योगस्तत्साधनं स्मृतमित्यभिधानात् । अथवा परमसांख्ययोगशास्त्रे गृह्येते नेतरे वेदबाह्ये तयोर्हेयत्वात् । सांख्यस्य निरीश्वरत्वात् । अत्रच ईश्वरस्य उक्तत्वात् । सांख्ययोगैश्च विहितहिंसायाअप्यनर्थहेतुत्वांगीकारात् । अत्रच कर्मबंधं प्रहास्यसीति मोक्षार्थत्वेनैव युद्धविधानात् । तदुक्तम् । उक्तंच परमं सांख्यं कपिलाख्येन विष्णुना । सेश्वरं वैदिकं साक्षाद्धेयमन्यदवैदिकमिति । बुद्ध्यते नयेति बुद्धिः । आत्मतत्वज्ञानविषये यथा बोधो भवति तथैवैषा वागभिहिता । योगे त्विमां वक्ष्यमाणां शृणु । यया बुद्ध्या युक्तोऽनभिसंधितफलेश्वरार्पितधर्मानुष्ठानादंतः करणशुद्धिः परमात्मसाक्षात्कारेण कर्मबंधं संसारं प्रकर्षेण हास्यसि त्यक्ष्यसीति ।३९।

येथपर्यंत उपदेशिलेल्या ज्ञानयोगाची समाप्ति करून तदुपायरूप फल असलेला कर्मसमाधियोग सांगण्यास प्रारंभ करितात:—परमात्मतत्वज्ञानाचे ठिकाणीं जशी तुझी बुद्धी जडेल तसा तुला हा कालपर्यंत उपदेश केला. आतां त्या परमात्मज्ञानाला उपयोगीं अशी कर्मविषयक बुद्धि सांगतों. ज्या बुद्धीनें निष्कामपूर्वक आपण केलेलें सत्कर्म परमात्म्याला अर्पण केलें असतां अंत:करणशुद्धि होऊन त्यानंतर होणाऱ्या ज्ञानानें परमात्मसाक्षात्कारद्वारा तूं कर्मबंधनरूप संसारदु:खापासून दूर होशील. येथें सांख्य किंवा योग शब्दानें श्रीनारायणाचा अवतार कपिलमहामुनिप्रणीत यथार्थज्ञानसाधनरूप सांख्यशास्त्र किंवा तत्साधनभूत योगशास्त्र हेंच घ्यावें. निरीश्वरवादिप्रणीत सांख्य किंवा योगशास्त्र घेऊं नये. कारण तें निरीश्वर असून वेदोक्त जी यज्ञांतील पशुहिंसा तीहि त्यांत अनर्थकारक सांगितली आहे. येथें वरील सांख्य किंवा भगवज्ज्ञानयोग याचे ज्ञानानें कर्मबंधनरूप संसारापासून मुक्त होऊन, नित्यसुखात्मक व मुक्तिरूप जो परलोक तो ईश्वरप्रसादानें प्राप्त होतो, असें श्रीकृष्णानें सांगितल्यावरून ईश्वर किंवा परलोक नाहीं असें सांगणारीं सांख्ययोगशास्त्रें उपयोगी नाहींत ॥ ३९ ॥

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥**

तदेवोपपादयति । नेहेति । इह निष्कामविष्ण्वर्पणार्थे वैष्णवकर्मयोगेभिक्रमस्योपक्रमस्य नाशो निष्फलत्वं नास्ति । उपक्रांतस्य विच्छेदे तदन्य धर्माकरणेवा प्रत्यवायो न गम्यते । अस्य वैष्णवधर्मस्य स्वल्पांशोपि संसाराद्रक्षति ॥ उक्तंच । प्रारंभमात्रमिच्छावा विष्णुधर्मे न निष्फला । नचान्यधर्माकरणाद्दोषवान् विष्णुधर्मकृत् । स्वोचितेनैव धर्मेण विष्णुपूजामृते क्वचित् । नाप्रवृत्तिः प्रवृत्तिर्वा यत्रधर्मः स वैष्णवः॥४०

मागें सांगितलेल्या ज्ञानसाधनीभूत कर्मयोगाचें वैशिष्ट्यपूर्वक फल सांगतात. हे **अर्जुना,** श्रीविष्णुप्रीत्यर्थ कृतनिष्काम वैष्णव धर्मरूप ह्या कर्मयोगाचा प्रारंभ करून मध्येंच नष्ट झाला तरी कृतधर्म निष्फल होत नसून सफल होतो. तोच धर्म प्रारंभ करून विच्छिन्न झाला असतां व एखादा अन्य धर्म न केला तरी

दोष नाहीं. व ह्या श्रीमत्परमात्मप्रिय अशा वैष्णव धर्माचा लेशमात्र अंगांत असला तरी तो या प्राण्याला महत्तर व दुस्तर अशा संसारगव्हरभयापासून रक्षण करितो. या दुर्भग जीवाकडून परमपूज्य वैष्णव धर्माचें आचरण संपूर्णपणे झालें नसलें तरी आपल्या आचरणाच्या इच्छामात्रानेंच स्वप्रिय परमात्म्याकडून लोकमनोभिष्ट सिद्ध करणारा तो जीव असदृश व परमपूज्य होतो ॥ ४० ॥

**व्यवसायात्मिका बुद्धिरेकेह कुरुनंदन ।**
**बहुशाखा ह्यनंताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥**

योगेत्विमां बुद्धिं श्रुण्वित्यनेन विष्णुनिष्ठाभावे श्रवणमात्रस्य वैयर्थ्यादुक्त्वा तत्र निष्ठां कुर्वित्यभिप्रेतम् तत्र बह्व्योहि बुद्धयो मतभेदात्तत्कथमेकत्रनिष्ठां करोमीत्यत आह । व्यवसायात्मिकेति । प्रमाण निर्णीतार्थविषया विष्णुपरायणा बुद्धिरेकैव । अव्यवसायिनां प्रमाणैर्निर्णेतुमशक्तानां बुद्धयो बहुशाखा ह्यनंताश्च । अतः प्रामाणिकेर्थे विश्वासो युज्यते । अप्रामाणिके सत्यपि विप्रतिपत्तिः किमपि न करोतीति भावः ॥ ४१ ॥

एतावता सांख्य किंवा योगशास्त्र सांगून त्यांतील वैष्णव धर्माचरण श्रद्धापूर्वक कर असें ह्मणण्याचा अभिप्राय दाखविला तर त्या त्या मतभेदानें वेदांचे अर्थही अनेक प्रकारचे होत असल्यानें यांतच कशी निष्ठा ठेवावी अशी शंका येईल तर त्याची निवृत्ति सांगतातः—हे कुरुकुलोत्पन्न अर्जुना, वेद-वेदांग शास्त्रांचे ठायीं प्रमाणानिश्चित वैष्णव धर्म विष्णुपरायण बुद्धिनिश्चयात्मक असून एकच होय. सच्छास्त्राधार मुळींच नसून केवळ स्वकपोलकल्पित अशा त्या त्या मताप्रमाणें अनिश्चितार्थ, परस्परविरुद्ध व भिन्नाभिन्न भावाला पोहोंचलेले मतभेद अनेक असतात. तूं श्रद्धापूर्वक व निश्चयात्मक बुद्धीनें वैष्णवधर्मनिष्ठ झालास तर तुला ते मतिभेद काय करूं शकणार आहेत ? ॥ ४१ ॥

**यामिमां पुष्पितां वाचं प्रवदंत्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥**

नन्ववैदिकमतानामप्रामाणिकत्वात् माभूत्तेषु विश्वासः वैदिकेषु निष्ठा

कथं स्यात् यतो वैदिका अपि केचित्कर्माणि स्वर्गादिफलान्येवाहुरित्यत आह । यामिमामिति । यां प्रवदंति तयेत्यन्वयः वेदवादरताः वेदैर्यन्मुखतउच्यते कर्मादिकं तत्रैव रताः । वादो विवादः संप्रोक्तो वादो वचनमेवच । वेदोक्त विष्णुमाहात्म्ये विवादात्पठनादपि । अथवा निरर्थकात्पाठाद्वेदवादी स उच्यते । वेदवादरतो नस्यान्नपाषंडी न हैतुकीत्यादिलक्षणाः । अन्यद्विष्णुसामीप्यादिरूपं मोक्षाख्यं फलं फलप्रदं विष्णवाख्यं ब्रह्मच नास्तीति वादिनः ॥ ४२ ॥

पूर्वींप्रमाणें वेदविरुद्ध मताविषयीं उपेक्षाबुद्धि स्विकारिली तरी वेदांतच कित्येक ठिकाणीं कर्ममार्ग श्रेष्ठ आहे असें सांगितल्यावरून ज्ञानच श्रेष्ठ कसें याबद्दल सांगतात—वेदांचा चांगल्या विचारानें मुख्यार्थ न समजतां भलताच अर्थ समजून सामीप्यादि मोक्ष किंवा मोक्ष देणारा परमात्माहि नाहीं असें बडबडणारे कर्मफलवादी स्वर्गप्राप्ति हाच काय तो पुरुषार्थ अशीं वचनें पुष्पाप्रमाणें फुलवून बोलतात. परंतु ते वेदार्थतत्व समजणारे नव्हेत असें समजावें. ४२

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

कामात्मानो भोगचित्ताः स्वर्गपराः स्वर्गएव परः पुरुषार्थ इति मन्यमानाः न विपश्चितः पुष्पितां मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां जन्मादिबहुसंसारफलप्रदां संततकर्मविशेषबहुलां यामिमां वाचं वेदात्मिकां भोगैश्वर्यगतिं तत्प्राप्तिंप्रति वदंति भोगैश्वर्यप्राप्त्यर्था एव वेदा इति वदंतीत्यर्थः ॥ ४३ ॥

पूर्वीं सांगितल्याप्रमाणें परमात्म्याविषयीं यथार्थ ज्ञान नसून, कर्मांचे ठायीं आसक्तचित्त होऊन, अनित्य अशा स्वर्गसुखाची इच्छा करणाऱ्यास वेद हे स्वर्गसाधन—प्रतिपादक आहेत असे भासतात. याविषयीं सांगतातः—विषयदूषित अंतःकरणामुळें स्वर्गसुखालाच परमपुरुषार्थ मानणारे अज्ञ लोक वेदार्थाचा लेशहि जाणत नसून वेदांत विस्तारानें वर्णिलेले जे क्रियाविशेष ते जन्ममरणरूप अशा संसारफलाला कारणीभूत व भोगैश्वर्यप्राप्तीला प्रतिपादक आहेत असें ह्मणतात. तर त्याविषयीं तूं विश्वास ठेवूं नको. ॥ ४३ ॥

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिकाबुद्धिः समाधौ न विधीयते ॥४४॥

तया वाचाप्यपहृतचित्तानां भोगैश्वर्ययोरासक्तानां सम्यक् प्रमाणनिर्णीता बुद्धिः समाधौ समाध्यर्थे न विधीयते । सम्यक् निर्णीतार्थानांहीश्वरे मोक्षसाधनं मनः समाधानं सम्यग्भवति नान्येषामित्यर्थः । अथवा अव्यवसायिबुद्धयो बहुविधा इत्युक्तम् । ताश्च कथं केषां भवंतीत्यत आह । यामिति । यां वाचं प्रवदंति तयापहृतचेतसां मोहितज्ञानानां बुद्धिर्व्यवसायात्मकत्वेन समाधौ न विधीयते । समाधिः समाधानं समस्थितिरिति ॥ ४४ ॥

तर त्यालाहि वैष्णवधर्मपर व निश्चयात्मक अशी बुद्धि कां होत नाहीं याविषयीं सांगतातः—केवळ नित्यानित्यवस्तुविवेकज्ञानशून्य होऊन, अनुभवास रमणीय वाटणाऱ्या स्रक्चंदनवनितादि विषयसुखांत आसक्त होऊन, विषासमान असणाऱ्या विषयसुखांतच ज्याचें चित्त गुंगलें आहे अशा पुरुषास, परमसुखाचें साधन व भगवत्प्रसाद उत्पन्न करणारी अशी विष्णुप्रिय व वैष्णवरूप निश्चयात्मक बुद्धि कदापि होत नाहीं. ॥ ४४ ॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वंद्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ४५

प्रतिज्ञातां योगबुद्धिमाह । त्रैगुण्यविषया वेदा इत्यादिना । वेदाः परोक्षार्थत्वादापाततस्त्रिगुणसंबंधिस्वर्गादिप्रतिपादकाइव प्रतीयंते । वादोविषयकृत्वंच मुखतो वचनं स्मृतमित्यभिधानात् । अतो निस्त्रैगुण्यो भव । प्रातीतिकार्थे भ्रांतिं मा कार्षीरिति व्याख्येयम् । नतु वेदपक्षो निषिध्यते । सर्वे वेदा यत्पदमामनंति इत्यादिना वेदानां सर्वात्मना विष्णुपरत्वोक्तेः । वेदप्रणिहितोधर्मो ह्यधर्मस्तद्विपर्यय इत्यादिना भागवते वेदाविहिताविहितस्य धर्माधर्मत्वोक्तेश्च । अथवा त्रैगुण्याख्यं विषं यापयंत्यपगमयंतीति त्रैगुण्यविषया वेदा अतस्ताना-श्रित्य निस्त्रैगुण्यो भवेति । तदुक्तं । आश्रित्य वेदांस्तु पुमांस्त्रैगुण्य-

विषहारिणः। निस्त्रैगुण्यो भवेन्नित्यं वासुदेवैकसंश्रयइति। निर्द्वंद्वो द्वंद्वसहिष्णुः भवेति सर्वत्रान्वयः। सत्वं विष्णुः। भावभवित्रोरभेदात्। सत्वं साधुगुणाद्विष्णुरात्मासंततिहेतुत इत्युक्तेः। नित्यं सत्वे स्थितः सततं विष्णुस्मरणवान्। अलब्धस्य लाभो योगः लब्धस्य रक्षणं क्षेमः। तौ देहनिर्वाहाविरोधेन नेच्छतीति निर्योगक्षेमः। आत्मवान् परमात्मा मम स्वामीति ज्ञानवान्। तेनैक्यज्ञानं निवारयति ॥ ४५ ॥

मागें सांगितलेली कर्मबुद्धि सविस्तर वर्णितात. हे **अर्जुना,** वेदहि आपाततः ( विषयासक्तचित्तानें पाहिलें असतां ) सत्वरजतमोगुणात्मक, अनित्य व स्वर्गादिसुख हाच पुरुषार्थ आहे असें सांगणारे आहेत, असें दिसतें. परंतु त्यांत विचारपूर्वक पाहिलें असतां सर्व प्रकारें ते वेद भगवद्गुणप्रतिपादकच आहेत. याकरितां तूं अविचारानें रमणीय अशा विषयाला लुब्ध होऊन वेद हेच मुख्यत्वानें कर्माचें प्रतिपादन करणारे आहेत असें समजूं नको. असें आहे तर वेद खोटें बोलतात असें होईल. तर तसें नसून त्यांविषयीं अज्ञान, लोकांस असा भास होतो. वेदांतील वेदार्थाचें मर्म जाणणारे दीर्घदर्शी लोक वेद हा सर्व प्रकारें विष्णुप्रतिपादकच आहे असें समजतात. याकरितां आपण सर्वकाळ साधुगुणयुक्त अशा परमात्म्याचे आधीन आहों, असें तूं समज व अदृष्टवशात् प्राप्त झालेलीं तत्कालीन सुखदुःखादि द्वंद्वें सहन कर आणि अलब्धलाभरूप योग आणि लब्धरक्षणरूप क्षेम या दोहोंच्या खटपटींत पडूं नकोस. एकंदरींत तूं असें समज कीं, आत्मवान् ह्मणजे माझा स्वामी परमश्रेष्ठ असा परमात्माच होय. अज्ञजनाप्रमाणें स्वातंत्र्यादि अनेक गुणानीं पूर्ण अशा परमात्म्याचें केवळ दुःखाचाच उपभोग घेण्यास योग्य अशा जीवाशीं तूं कदापि ऐक्य मानूं नको. ॥ ४५ ॥

**यावानर्थ उदपाने सर्वतः संप्लुतोदके।**
**तावान्सर्वेषु वेदेषु ब्राम्हणस्य विजानतः ॥ ४६ ॥**

ननु यथा सकामानां समाध्यभावेन ज्ञानाभावान्मोक्षो न भवति। तथा निष्कामानां ज्ञानिनां स्वर्गफलं न भवतीति साम्यमेवेत्यत आह। यावानिति। यथातथा शब्दावध्याहार्यौ यावांस्तावा-

नित्येतयोरावृत्तिः । यथा यावानर्थः प्रयोजनमुदपाने कूपे भवति तावान्सर्वतः संप्लुतोदके भवत्येव तथा सर्वेषु वेदेषु काम्यकर्मिणां यत्फलं तद्विजानतो ज्ञानिनो ब्राह्मणस्य फलेंतर्भवति । ब्रह्म अणतीति ब्राह्मणः । अपरोक्षज्ञानी सहि ब्रह्म गच्छति । अपरोक्ष ज्ञानसाधनं दर्शयति । विजानत इति । अथवा त्रैगुण्यनिवृत्त्यर्थं वेदाश्रयणं कार्यमित्यत्र हेतुमाह । यावानिति । सर्वतः संप्लुतं व्याप्तमुदकं यस्मिन् प्रलये स सर्वतः संप्लुतोदकः प्रकृतिर्बुद्बुदरूपेण सर्वमावृत्य तिष्ठति । प्रलयेतोलयंप्राहुः सर्वतः संप्लुतोदकमितिवचनात् । तस्मिन्प्रलयेप्युद्रिक्तत्वात् । पालकवर्जितत्वात् । कालाद्यखिलचेष्टकत्वात् । उदपानो विष्णुः उद्रेकात्पातृराहित्यादनत्वाच्चाखिलस्य च । प्रलयेप्युदपानोसौ भगवान्हरिरीश्वरइतिवचनात् । तस्मिन्प्रलये यावत्फलं तावत्सर्ववेदेषु विशेषज्ञानी यः तस्यैव भवतीत्यर्थः । उक्तंच । यावत्प्रयोजनं विष्णोः सकाशात्साधकस्यतु । धर्ममोक्षादिकं तावत्सर्ववेदविदो भवेत् । वेदार्थनिर्णयो यस्माद्विष्णोर्ज्ञानं प्रकीर्तितम् । ज्ञानात्प्रसन्नश्चहरिर्यतोऽखिलफलप्रद इति ॥ ४६ ॥

ज्याप्रमाणें विषयासक्त मनुष्याला सर्व वेद भगवत्पर आहेत अशी निश्चयात्मक बुद्धि नसल्यानें त्यास परम पुरुषार्थरूप सालोक्य सामीप्यादि मुक्तींचें सुख मिळत नाहीं; त्याप्रमाणें निश्चयात्मक बुद्धीनें युक्त अशा परमात्मज्ञानी जनास वेद हा स्वर्गास साधन जो यज्ञ त्याचें प्रतिपादन करणारा आहे, असें न वाटल्यानें त्या परमात्मज्ञान्यासही स्वर्गफल मिळणार नाहीं अशी शंका येईल ह्मणून भगवान् ह्मणतातः—लहानशा विहिरीच्यायोगानें लोकांचीं जेवढीं स्नानपानादि प्रयोजनें होतात तेवढीं प्रयोजनें सर्व बाजूनीं संपूर्ण विमल जल असलेल्या अगाध महानदीपासून होत नाहींत असें नाहीं. फार काय ! होतात असें ह्मटल्यास चालेल. ज्याप्रमाणें कामी लोकांनीं इच्छिलेले असे स्वर्गादि फलरूप अनेक अर्थ वेदांपासून त्या लोकांस प्राप्त होतात, त्याप्रमाणें सर्व वेदांत परमात्म्याचें प्रतिपादन आहे असें जाणणाऱ्या ब्रह्मज्ञान्यासही फलप्राप्ति होते. ह्मणजे वेदांपासून ज्ञानप्राप्ति होण्याचे उपाय समजतात व त्या वेदांपासून मुज्ञास होणारें जें ज्ञान तेंच परोक्षज्ञान व यापासूनच अपरोक्षज्ञान

होतें. ह्मणजे बिंबरूपी परमात्म्याला पाहण्यास समर्थ असें ज्ञान उत्पन्न होतें. व त्याच्या प्रसादानें प्राप्त होणाऱ्या परम मुक्तिसुखांत स्वर्गादि सुखें अंतर्भूत होतात. ह्मणून निष्काम भक्तियोगानें अपरोक्षीकृत गुणगणांचा सागर व करुणासिंधु अशा श्रीहरीपासून प्राप्त झालेला महानदीच्या स्वच्छ उदकाप्रमाणें असणाऱ्या मुक्तिसुखाचा अनुभव घेणारा ज्ञानी विहिरींतील उदकाप्रमाणें अत्यल्प अशा स्वर्गादिसुखाच्या अनुभवाची इच्छा करीत नाहीं. अथवा त्रिगुणात्मक अशा या भवबंधापासून मुक्त होण्याकरितां वेदार्थज्ञान अवश्य संपादन करावें अशाबद्दल सांगतात. प्रळयकालीं लक्ष्मीरूप स्वच्छ उदकाचे ठिकाणीं सर्वव्याप्तरूपानें असणारा जो कालादि प्रेरक व ज्याला अन्य नियामक नाहीं असा भवभंजनाविषयीं समर्थ व बिंबभूत असा जो **श्रीभगवान्** याच्या कृपापूरित अवलोकनरूप प्रसादमात्रानें प्रतिबिंबभूत जीवगणास ज्याप्रमाणें संसारावृत्तिरहित असें परममुक्तीचें सुख प्राप्त होतें त्याचप्रमाणें सर्व वेदांत भगवत्तत्व प्रतिपादन केलें आहे असें समजलें तर परमसुख प्राप्त होतें. ॥ ४६ ॥

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥**

याभिमामिति कामात्मनां निंदा कृता सा नोपपद्यते । स्वर्गकामो यजेतेत्यादौ स्वर्गादिकामं प्रत्येव यागादेर्विहितत्वादित्यत आह । कर्मणीति ॥ ते इत्युपलक्षणार्थं तव ज्ञानिनोपि कर्मण्येवाधिकारो नतु फलेषु । फलकामनायां मोक्षविलंबप्रसंगात् किमुतान्येषां फलश्रुतिस्तु रोचनार्थमितिभावः । अतो मा कर्मफलहेतुर्भूः । कर्मफलं तत्कृतौहेतुर्यस्य स मा भूः । तर्हि क्लेशरूपं कर्म न करोमीत्यत आह ॥ त इति ॥ कर्मणोऽकरणे स्नेहो मास्तु अन्यफलाभावेपि मत्प्रसादाख्याफलभावादिति भावः । अथवात्मवानित्यैक्यभावनं न कर्तव्यमित्युक्तं तद्धेत्वभिधानेनोपपादयति ॥ कर्मणीति ॥ कर्माधिकारिणस्त्वदादयो जीवाः फलंतुमदायत्तमितिभावः । अतः कर्मफलस्य हेतुरीश्वरस्त्वं माभूः । नेश्वरोहमिति भावं कुरु ॥ ४७ ॥

स्वर्गप्राप्तीची इच्छा धरून यज्ञादि कर्मे करणें हें निंदास्पद आहे तर ( स्वर्गकामो यजेत ) इत्यादि श्रुतींत प्रतिपादन केलेलीं यज्ञादि कर्मे निंद्य कशीं होतील या शंकेबद्दल सांगतात:—तुझ्यासारख्या ज्ञान्याला सुद्धां कर्म करण्याचा मात्र अधिकार असून फलेच्छा करण्याचा अधिकार नाहीं. कारण त्या कर्माचें फल जें स्वर्गादि सुख तें भोगीत असतां पुनः पुनः त्याच संस्कारानें अनेक तऱ्हेचीं कर्मे करून त्यांच्या फळाचा उपभोग घेण्यांत गुंतल्यास तुझ्यासारख्या ज्ञान्यासहि मोक्षप्राप्तीस विलंब होईल असें असतां अज्ञजनांनीं कर्मफळाच्या भोगांत रत होऊं नये हें काय सांगावें. वेदामध्यें जीं स्वर्गादि फलें ऐकूं येतात त्यांचा हेतु इतकाच कीं, अज्ञ जनांस त्या फळांच्या इच्छेनें वेदांबद्दल निष्ठा उत्पन्न व्हावी व क्रमानें त्यांनां ब्रह्मज्ञान प्राप्त व्हावें एवढ्याकरितां तें योग्यहि आहे. जसें आई आपल्या बाळानें परिणामीं सुखावह असें औषध घ्यावें ह्मणून प्रथमतः गूळ दाखवून नंतर औषध पाजिते तसें संसाररोगग्रस्त जनांचें सर्व दुःख निरसन व्हावें ह्मणून ब्रह्मज्ञानरूप औषध पाजविण्याच्या हेतूनें वेदांत स्वर्गसुखाचें वर्णन केलें आहे. यावरून तूं तसें कर्म करूं नको असें नव्हे. कारण तें कर्म दुःखकारक आहे तरी अवश्य केलेंच पाहिजे. कारण निष्काम अशीं यज्ञादि कर्मे करण्यानें अंतःकरण शुद्ध होतें, अंतःकरणाच्या शुद्धीनें बिंबरूपी परमात्म्याचें ज्ञान होतें, व त्याच्या प्रसादानें मोक्षहि मिळतो. अथवा मागें जीवेशाचें ऐक्य मानूं नको असें जें सांगितलें आहे त्याचें कारण असें आहे कीं, तुझ्यासारखे सर्व जीव कर्म करण्यास मात्र अधिकारी. फल देणें हें माझें कर्तव्य होय. याकरितां तूं कर्मफल देणारा ईश्वर आपणच असें समजूं नको. तें ऐक्याचें ज्ञान केवल अकर्म होय. ह्मणजे नित्यदुःखात्मक अंधतमरूप अशा नरकास साधनभूत होय. याकरितां त्या तऱ्हेच्या ऐक्यज्ञानाचे ठिकाणीं तूं कदापि आसक्ति ठेवूं नको. दाता व प्रतिगृहिता या उभयतांत दात्यालाच उघड श्रेष्ठत्व आहे. तर अशेष कर्मफलदाता व अगणित सद्गुणराशि अशा माझ्या प्रसादानें परम दुःखकारक अशा संसारापासून मुक्त होऊं इच्छिणारे असे जीव व मी हें एकच असें ह्मणणें समंजसपणाचें कसें होईल ? ॥ ४७ ॥

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।**
**सिध्द्यसिध्द्योः समो भूत्वा समत्वं योग उच्यते ।४८।**

कर्माकरणे स्नेहो मास्त्वित्युक्तं स्पष्टयन्नाह । योगस्थइति । उपायस्थः ज्ञानसाधनमनुतिष्ठन् । संगं फलस्नेहं त्यक्त्वा तत एव सिध्यसिध्योः समो भूत्वा कर्माणि कुरु । कोसौ योग इत्यत आह । समत्वमिति । संगत्यागविशिष्टं समत्वमेव योग इत्यर्थः ॥ ४८ ॥

कर्म न करितां राहण्याविषयीं आलोचना करूं नको असें सांगितलें त्याविषयीं स्पष्टीकरण करितातः—हे **अर्जुना,** उपायानें ज्ञानसाधनीभूत असें कर्मानुष्ठान करून त्याच्या फलाविषयीं आसक्ति ठेवूं नको. कर्मफलरूप सिद्धि किंवा असिद्धि या दोन्ही सारख्या मानाव्या. कारण कर्मफलाची सिद्धि हेंच स्वर्गादि सुख होय. तें अनित्य असून दुःखमय असल्यानें दैववशात् सहज प्राप्त होणाऱ्या जीवसुखापेक्षां त्या स्वर्गसुखांत विशेष मोठेपणा नाहीं. वरील सिद्धि किंवा असिद्धी सारख्या मानणें यांसच योग असें ह्मणतात.

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

इतश्च योगाय युज्यस्वेत्याह । दूरेणेति । बुद्धियोगाज्ज्ञानलक्षणादुपायात् दूरेणातीवावरं कर्म । अतो बुद्धौ शरणं ज्ञानोपायानुष्ठानलक्षणम् । ज्ञाने स्थितिमन्विच्छ । कथं कर्म ज्ञानादतीवावरामित्यत आह । कृपणा इति । फलं कर्मकृतौ हेतुर्येषां ते फल हेतवः कृपणादीना इत्यर्थः । यद्वा ज्ञानस्योत्तमावस्थायामीश्वरैक्यभावनं न युक्तमित्याह बुद्धाविति । बुद्धौ जातायामपि विष्णुमेव शरणमन्विच्छ फलहेतवः ईश्वरोहमितिमन्यमानाः कृपणाःशोच्याः तदुक्तम् । अज्ञानां ज्ञानिनांचैव मुक्तानां शरणं हरिः । तंयेस्वैक्येन मन्यंते सर्वभिन्नं गुणोछ्र्यात् । कृपणास्ते तमस्यंधे निपतंति न संशयः । नतेषामुत्थितिः क्वापि नित्यातिशयदुःखिनामिति ॥ ४९ ॥

हे **धनंजया,** ज्ञानोपायापेक्षां काम्यकर्म अत्यंत नीच आहे. याकरितां तें कर्म ज्ञानप्राप्तीला साधन आहे असें तूं समज. जे लोक ज्ञानापेक्षां कर्म

कनिष्ठ आहे असें जाणत नाहींत व फलाच्या इच्छेनें काम्यकर्म करितात ते दीन होतात. अथवा उत्तम ज्ञानावस्था प्राप्त झाली ह्मणजे जीव ईश्वराशीं ऐक्यता पावतात असें विरोधि स्वकपोलकल्पित मत मनांत धरूं नको अशा-बद्दल सांगतात. कर्माहून अतिश्रेष्ठ व भवबंधमोचनास कारणीभूत असें ब्रह्म-ज्ञान प्राप्त झालें तरी सर्व दुःखरूप संसारापासून ज्या परमात्म्याच्या प्रसादानें ज्ञानानंदपूर्ण असा जीव होतो तो परमात्मा श्रीहरी सर्व जीवसमुदायापासून भिन्न असून विलक्षण सामर्थ्यवान् आहे असें तूं समज. आपणच ईश्वर असें समजून सर्व कर्मफलास आपणच कारण असें मानणारे हे नित्य दुःखयुक्त अंधतम नामक पुनरुत्थितिरहित नरकांत पडतात. याकरितां ते अति शोचनीय होत. ॥ ४९ ॥

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥**

काम्यकर्मिणां कृपणत्वेपि कथं कर्म दूरेणावरमित्यपेक्षायां कर्मफलाद्विलक्षणं ज्ञानफलमाह । बुद्धि युक्त इति । ज्ञानस्य महाफल-त्वात् । योगाय ज्ञानोपायाय युज्यस्व प्रयतस्व । योगं स्तौति । अथवा अस्तु योगे प्रयत्नः । किं फल स्नेहरहितकर्मणेत्याशंक्य यथावत् विष्णुं ज्ञात्वा तदर्थत्वेन कर्मकरणमित्येतत्कौशलमेव योग इत्याह । योग इति५०

काम्यकर्मयोगानें जर मनुष्यें अति दीन झालीं तर कर्म हें ज्ञानाहून अति नीच कसें याबद्दल सांगतातः—बिंबरूपी परमात्म्यास स्वतः पाहणारा असा अपरोक्ष ज्ञानी हा सुकृत अथवा दुष्कृत अशीं दोन्हीहि कर्मे टाकितो. सुकृतत्याग ह्मणजे मनुष्याच्या जन्मादिकांस साधनीभूत अशीं मुक्तिविरोधी जीं पुण्यें त्यांचा त्याग होय; दुष्कृतत्याग ह्मणजे सर्व दुष्कृतांचा त्यागच होय. ज्ञान हें श्रेष्ठ फल असल्यानें त्याच्या उपायाविषयींच आसक्ति धर. तो उपाय ह्मणजे सर्वोत्तम जो विष्णु तज्ज्ञानपूर्वक व तदर्पणबुद्धीनें कर्म करणें हा होय. यालाच योग असें ह्मणतात. आणि या योगापासूनच तें वरील ज्ञान उत्पन्न होतें. ॥ ५० ॥

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबंधविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

ज्ञानसाधनं कर्मज्ञानफलं च मोक्षं विवृणोति । कर्मजं फलं त्यक्त्वा अकामनयेश्वरे समर्प्य बुद्धियुक्ता सम्यग्भगवत्ज्ञानिनो मनीषिणः अपरोक्षज्ञानिनो भूत्वा जन्मबंधादतितरां निर्मुक्ता अनामयं निर्दुःखं पदं गच्छंति । सयोगंकर्मज्ञानसाधनं ज्ञानं मोक्षसाधन मितिभावः ॥ ५१ ॥

निष्काम कर्मानें शुद्धांतःकरण मनुष्याला ब्रह्मज्ञान उत्पन्न होऊन त्यापासून जीवाला मुक्ति मिळते अशाबद्दल सांगतातः—ब्रह्मापरोक्षज्ञान असलेले लोक सर्व सत्कर्में ईश्वरार्पणबुद्धीनें करून त्यायोगानें जननमरणरूप भवबंधापासून मुक्त होऊन ते दुःखरहित, परमश्रेष्ठ व पुनरावृत्तिवार्जित अशा विष्णुलोकाला जातात. भगवदर्पणरूप उपायानें सत्कर्म होतें, त्यापासून ब्रह्मज्ञान, ब्रह्मज्ञानापासून मोक्ष मिळणें हाच काय तो मुख्य तात्पर्यार्थ. ॥ ५१ ॥

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

कियत्पर्यंतं मुमुक्षुणा निष्कामतयेश्वरप्रीत्यर्थं कर्माण्यवश्यं कर्तव्यानीत्यतआह । यदेति । यदा ते बुद्धिरंतःकरणं मोहकालिलमन्यथाज्ञानलक्षणं दोषं व्यतितरिष्यति परित्यक्ष्यति । तदा महभ्द्यः श्रुतस्य श्रोतव्यस्यच वेदादेर्नितरां लाभं गंतासि प्राप्स्यसीत्यर्थः तदुक्तं । बुद्धिमोहो यदा नस्यादन्यथा ज्ञानलक्षणः । श्रोतव्यश्रुतसाफल्यं तदा प्राप्नोति मानव इति ॥ ५२ ॥

मुमुक्षूनें किती काळपर्यंत ईश्वरार्पणबुद्धीनें कर्म करावें याविषयीं सांगतातः—हे अर्जुना, ज्यावेळीं तुझी बुद्धि अन्यथा ज्ञानरूप दोषाला टाकील त्या वेळीं विद्वज्जनापासून श्रुत ( ऐकलेलें ) अथवा श्रोतव्य ( ऐकावयाचें ) अशा वेदादि शास्त्रांचें साफल्य होईल; ह्मणजे तों वेळपर्यंत ईश्वरार्पण बुद्धीनें कर्म केल्यावांचून शुद्धांतःकरण होऊन ब्रह्मज्ञान होत नाहीं हाच तात्पर्यार्थ ॥ ५२ ॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

पूर्वश्लोकार्थविवरणपूर्वकं बुद्धिमोहतरणपदोक्तं सम्यग्ज्ञानफलमाह । श्रुतिविप्रतिपन्नेति । पूर्वं श्रुतिभिर्वेदैः विप्रतिपन्ना विरुद्धासती बुद्धिर्यदा वेदार्थानुकूलेन तत्वनिश्चयेन विपरीतवाग्भिरपि चंचला न भवति । अनेनपरोक्षज्ञानकाष्ठा दर्शिता ततश्च समाधावचला ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानंदमग्नत्वात् । एतेनापरोक्षज्ञानकाष्ठा दर्शिता । तदा योगं योगफलमवाप्स्यसि उपायसिद्धो भवसि इत्यर्थः । अथवा श्रुतिविप्रतिपन्नेति श्रुतौ विशेषेण प्रतिपन्नेत्यर्थः । श्रुतिमार्गं प्रपन्नातु तदर्थज्ञाननिश्चला । समाधानेन तु पुनरापरोक्ष्याच्चनिश्चला । विष्णौ प्राप्स्यति तद्योगं मुक्तो भूत्वा तदश्नुत इति ॥ ५३ ॥

मागें सांगितलेल्या प्रकारचे मोह तरल्यानंतर उत्पन्न होणाऱ्या यथार्थ ज्ञानाचें विवरण करितातः—ज्या वेळीं श्रुतीचे ठिकाणीं परस्पर विरोधाभास झालेली बुद्धि असच्छास्त्राच्या श्रवणानें सुद्धां चंचल न होतां सर्व वेदांला अनुसरून परमात्मनिष्ठ होते किंवा त्यानंतर समाधि ह्मणजे ब्रह्मप्रत्यक्ष दर्शनानें उत्पन्न झालेली निष्ठा भेरीताडनादि मोठमोठ्या विघ्नांनीं सुद्धां चंचल होत नाहीं त्या वेळीं भगवदर्पणबुद्धीनें केलेल्या कर्मरूपयोगाचें फळ प्राप्त झालें असें समज. ॥ ५३ ॥

अर्जुन उवाच.

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥

ज्ञानिनि प्रकृते तल्लक्षणादिजिज्ञासया अर्जुनः पृच्छति । स्थितप्रज्ञस्येति । अर्जुनस्य ज्ञानित्वेपि लोकोपकारार्थं प्रश्नः । उक्तंच । जानंति पूर्वं राजानो देवर्षयस्तथैवच । तथापि धर्मान्पृच्छंति वार्तायै गुह्यवित्तयइति । यद्यपि समाधावचला बुद्धिरित्यनेन लक्षणमुक्तं तथापि अयावल्लक्ष्यभावित्वान्नतत्सम्यग्व्यवहारोपयोगि यावल्लक्ष्यभावितु सार्वत्रिकव्यवहारोपयोगि ज्ञास्यामीत्याशयेनोक्तलक्षणमनु-

तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानकर्मयोगोनाम चतुर्थोऽध्यायः ॥ ४ ॥

एवमुपपादितं कर्मणः कर्तव्यत्वमुपसंहरति । तस्मादिति । अज्ञानजं हृद्गतं आत्मनः संशयं ज्ञानाख्येन खड्गेन च्छित्वा योगमातिष्ठ युद्धायोत्तिष्ठेति ॥ ४२ ॥

इति श्रीमद्भगवद्गीताविवृतौ विद्याधिराजभट्टोपाध्यायविरचितायाम् श्रीमध्वमतानुवर्तिनी व्याख्योपेतायाम् चतुर्थोऽध्यायः ॥ ४ ॥

याप्रमाणें कर्मांचें कर्तव्य सांगून, उपसंहार करितातः—हे भरतकुलोत्पन्ना, ह्मणून, तुझ्या मनांत उत्पन्न झालेला गोत्रवधाचा संशय, ज्ञानरूप तलवारीनें छेदून टाक; सावध हो आणि भगवदर्पण करण्याचे हेतूनें तुझें कर्म-युद्ध-तें करण्यास तयार हो. ॥ ४२ ॥

येथें श्रीमदिन्दिराकान्ततीर्थ श्रीपादविरचित प्राकृत टीकेचा चवथा अध्याय समाप्त झाला.

# अथ पञ्चमोऽध्यायः

अर्जुन उवाच ।

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

श्रीगुरुभ्यो नमः । निरूपितः पूर्वं समुचितः कर्मयोगः स च योगसंन्यासभेदेन द्विविधः । तस्य द्विविधस्य योगस्य स्वरूपं संक्षेपेण कुरुकर्माणि संगंत्यक्त्वेत्यादौ उक्तम् तदेवास्मिन्नध्याये प्रपंच्यते । तत्रार्जुनउवाच । संन्यासमिति । यदृच्छालाभसंतुष्टइत्यादिना संन्यासं कामादिवर्जनलक्षणं शंससि कुरुकर्मेति कर्मयोगंच शंससि । एतयोरुक्तलक्षणयोः संन्यासकर्मयोगयोर्मध्ये यच्छ्रेयोऽधिकं तदेकं मम सुनिश्चितं यथास्यात्तथाब्रूहि । अयंभावः संन्यासस्याधिकत्वे तमेव गृहीष्यामि किं तद्विरोधिना रागादियुक्तेन युद्धाख्येनाधिकेनापि कर्मयोगेनेति । अथवा योगसंन्यस्तकर्माणमित्यादिना संन्यासाश्रमं शंससि । योगमातिष्ठेत्यादिना गृहस्थाश्रमं । एतयोर्मध्ये यच्छ्रेयस्तद्ब्रूहि । उभयोरेकेनैवानुष्ठातुमशक्यत्वादन्यतरपरित्यागे नान्यतरग्रहणे श्रेयसएवग्राह्यत्वादितिप्रश्नाभिप्रायः ॥ १ ॥

( पूर्वींच्या अध्यायांत, संन्यासयोग व कर्मयोग यांचें संक्षेपानें निरूपण केलें. या अध्यायांत त्यांचें विस्तारानें निरूपण कारितील ) अर्जुन ह्मणतो, हे भगवान् श्रीकृष्णा, कर्मांचा त्याग करून, यदृच्छालाभानें संतुष्ट असावें ह्मणून प्रथम सांगून, पुन्हा कर्म करावें ह्मणून सांगतोस; परंतु, या दोहोंमध्यें जें मला अधीक श्रेयस्कर होईल तें सांग; ह्मणजे संन्यास मला श्रेयस्कर होण्यासारखा असेल तर त्याचाच मी स्वीकार करीन; ह्मणजे रागद्वेषादिकांनीं युक्त असें युद्ध करावयास नको; किंवा गृहस्थाश्रमाचा स्वीकार करून, कर्म करणें मला उक्त असेल तर तसें सांग; ह्मणजे मी त्याप्रमाणें करीन. ॥ १ ॥

श्री भगवानुवाच ।

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥

श्रीभगवानुवाच । संन्यासइति । द्वावपि निःश्रेयसकरौ तत्रापि संन्यासात् योगोविशिष्टोऽतो न युद्धं त्वया त्याज्यमिति परिहारः द्वितीये प्रश्नाभिप्रायेतु संन्यासकर्मयोगावुभौ समुचितौ निःश्रेयसकरौ तस्मात् द्वावप्यनुष्ठेयौ तत्रान्यतरश्रेयस्त्वप्रश्नोऽनर्थकएव । स्वरूपमात्रज्ञानार्थं प्रश्नश्चेद्योगएव विशिष्ट इति ॥ २ ॥

श्रीकृष्ण ह्मणतात हे अर्जुना, संन्यास आणि कर्मयोग हे दोन्हीही कल्याणकारकच आहेत; परंतु या दोहोंत, कर्म करणें ( कर्मयोग ) हेंच चांगलें; ह्मणून तूं तुझें कर्म जें युद्ध त्याचा त्याग करणें बरें नव्हे. अथवा संन्यास व कर्मयोग उभयहि समुचित एकव्यानें आचरण केल्यास ते उत्तम कल्याणकारक होतात. ह्मणून यांत श्रेष्ठ कोण ? हें विचारणेंच मुळीं चांगलें नव्हे. पण त्यांचें ( कर्म व संन्यास यांचें ) स्वरूप समजावें ह्मणून प्रश्न असेल तर, यांत कर्मयोग श्रेष्ठ आहे असें समज. ॥ २ ॥

ज्ञेयः स नित्यसंन्यासि यो न द्वेष्टि न कांक्षति ।
निर्द्वंद्वो हि महाबाहो सुखं बंधात्प्रमुच्यते ॥ ३ ॥

संन्यासस्य निःश्रेयसकरत्वं ज्ञापयितुं संन्यासशब्दार्थं स्मारयति । ज्ञेयइति । स्मर्तव्यइत्यर्थः व्याख्यानांतरे तु कथं योगसंन्यासयोः समुच्चयो युज्यते यतिगृहस्थयोरधिकारभेदादित्यतआह । ज्ञेयइति । योगसंन्यस्तकर्माणमित्यादौ द्वेषादिवर्जनमेव संन्यासोभिमतो न यत्याश्रमइतिभावः । एवं योगमातिष्ठेत्यादौ भगवदर्पणादियोगएवाभिमेतो न गृहस्थाश्रम इत्यपि द्रष्टव्यम् । नच कामादिवर्जनस्यसंन्यासशब्दार्थत्वे काम्यानां कर्मणांन्यासंसंन्यासमित्यनेन विरोधः । तेनापि सहितस्यसत्वात् । नच सर्वकर्मफलत्यागंप्राहुस्त्यागंविचक्षणाइति कामादिवर्जनस्य त्यागत्वेनोक्तत्वात्तद्विरोधः । कुरुपांडवन्यायेन संन्यासावांतरभेदत्वात्त्यागस्येति द्रष्टव्यम् ॥ ३ ॥

संन्यास हाच कल्याणदायक आहे असें दाखविण्याकरितां, संन्यास ह्मणजे कर्म संन्यास–कर्म योग–कर्म करणें–हीं दोन्हीं आचरलीं असतां कल्याणदायकच होतात; परंतु, त्या दोन्हींचे अधिकारी यति व गृहस्थाश्रमी

यांचे अधिकार निरनिराळे असल्यामुळें एकालाच ते दोन्हीं करतां येणें अशक्य होय. ह्मणून संन्यास ह्मणजे काय तें सांगतातः—हे भुजशाली अर्जुना, जो भगवद्भक्तांचा द्वेष करीत नाहीं व कशाचीही इच्छा करीत नाहीं, सुखदुःखादि द्वंद्वरहित असा असतो, तोच संन्यासी समजावा; असा संन्यासी अनायासें संसारबंधापासून मुक्त होतो. ॥ ३ ॥

**सांख्ययोगौ पृथग्बालाः प्रवदंति न पंडिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विंदते फलम् ॥ ४ ॥**

ननु कामादिवर्जनस्य ज्ञानोत्पत्त्यंतरंगत्वेन परीक्ष्य लोकान् कर्मचितान् ब्राह्मणोनिर्वेदमायादित्यादिश्रुतिसिद्धत्वात्कर्मानुष्ठानस्याग्निमुग्धोहवैधूमतांतःस्वर्लोकं न प्रतिजानाति इत्यादिना निंदितत्वात्कथं संन्यासाद्योगोवरइत्यतआह । सांख्ययोगाविति । ज्ञानकर्मयोगौ पृथक् साध्यसाधनभावहीनाविति बाला अविवेकिनोवदंति नतु पंडिताः । अग्निमुग्धइतितु काम्यकर्मविषयमितिभावः । योगस्य ज्ञानसाधनत्वे प्रमिते भवेदेतत्तदेवकथमित्यतआह । एकमपीति ॥ ४ ॥

ज्ञानयोग व कर्मयोग हे, निराळे आहेत असें अविवेकी लोक ह्मणतात; पण ते निराळे नाहींत असें विवेकी ( पंडीत ) लोक ह्मणतात. या दोहोंपैकीं एकाचेंही चांगल्या रीतीनें आचरण केलें असतां, दोहोंचेंही फळ मिळतें. कर्मयोगाचें योग्य प्रकारें आचरण केलें असतां ज्ञान प्राप्त होऊन, दोहोंच्या आचरणानें मिळणारें जें मोक्षफल तें मिळतें. ॥ ४ ॥

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ।५।**

तस्याभिप्रायमाह । यत्सांख्यैरिति । सांख्यैर्ज्ञानिभिर्यत् स्थानं प्राप्यते तद्योगैः योगिभिरपि ज्ञानद्वारा गम्यते एवंच सांख्यंचयोगंच एकं साध्यसाधनभाववत् यः पश्यति स ज्ञानीत्यर्थः । द्वितीयव्याख्याने तु योगसंन्यासशब्दयोराश्रमार्थत्वाभावाद्योगसंन्यासयोराधिकारभेदप्रयुक्तः समावेशाप्रयोगोनिरस्तः । अथासावधिकारभेदो न युज्यते इत्याह

सांख्ययोगाविति । बालास्तु संन्यासशब्देन यत्याश्रममेव स्वीकृत्य तत्स्थानामेव सांख्यशब्दोदितज्ञानाधिकारोगृहस्थानामेव योगशब्दोदितकर्माधिकार इतिमन्यंते । तन्न पंडितामन्यते । कुतःयस्मात् ज्ञानमार्गे कर्ममार्गेवासम्यगास्थितः उभयोरपि फलं प्राप्नोति । तस्मात् ज्ञानिनां यतीनां कर्माप्यनुष्ठेयं । कर्मिणामपि गृहस्थादीनां ज्ञातव्यो भगवान् । नहि ज्ञानं विना कर्मणः सम्यगनुष्ठानं भवति । आश्रमभेदस्तु कर्मसंकोचविकासापेक्षइति श्लोकद्वयतात्पर्यार्थः ॥ ५ ॥

ज्ञानयोग किंवा कर्मयोग हे दोन्हींही आचरण्यास एकच अधिकारी योग्य आहे असें जो समजतो, तोच ज्ञानी समजावा; ज्ञानयोगी संन्याशाला कर्मयोगाचा अधिकार आहे, व कर्मयोगी गृहस्थाला ज्ञानयोगाचा अधिकार आहे, दोघांनांही एकाच स्थानाची—मोक्षाची—प्राप्ति होते. ॥ ५ ॥

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रम्ह न चिरेणाधिगच्छति ॥ ६ ॥**

संन्यासाद्योगस्यवरत्वमन्वयव्यतिरेकाभ्यामुपपादयति । संन्यासस्त्विति । अयोगतः योगंविना संन्यासोदुःखम् कामजयादिजनितमाप्तुमेव न मोक्षादिप्राप्त्यर्थमितिव्यतिरेकः । यच्चाल्पफलम् तन्महाफलस्य योगस्य पद्मरागस्येव तंडुलमुष्टिफलमेव न भवतीत्याशयः । मुनिः संन्यासी सहिलोके मुनिर्नाम यः कामक्रोधवर्जित इत्युक्तेः । योगयुक्तःसन्नचिरेण शीघ्रं ब्रह्मादिगच्छतीत्यन्वयः । व्याख्यानांतरेतु समुचितयोरेव योगसंन्यासयोर्निःश्रेयसकरत्वमुक्तम् तदन्वयव्यतिरेकाभ्यामुपपादयति । अयोगतइतिभावप्रधानोनिर्देशः योगरूपत्वंविनेत्यर्थः । उक्तंच । मोक्षोपायोयोगइति तद्रूपोन्यासएवतु । विष्णवर्पिततयाभद्रोनान्योन्यासः कथं च नेति । एवंच व्याख्यानद्वयेपिसंन्यासस्ययोगांतर्भूतत्वं सिद्धम् ॥ ६ ॥

हे भुजशाली अर्जुना, कृष्णार्पण करण्याच्या हेतूनें केलेला कामादिवर्जनरूप संन्यास मोक्षप्राप्तीस साधन आहे, ह्मणून तो संन्याशाला योगरूपत्व आहे. या योगरूप संन्याशाला मोक्ष साधनत्व आहे. योगरूप नसलेल्या

संन्यासास मोक्ष साधनत्व नाहीं. अथवा योगावांचून संन्यासाची प्राप्ति दुर्घट होय. योगयुक्त संन्यासी लवकर मोक्षास जातो. ॥ ६ ॥

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

योगयुक्तसंन्यासस्य मोक्षार्थत्वं प्रपंचयति । योगयुक्तइति । योगयुक्तः विशुद्धचित्तः अतएव विजितात्मा विजितमनाः जितान्येन्द्रियः सर्वभूतानामादानकर्तृत्वादात्मभूतः परमात्मा सः स्वसमीपंप्रत्यादानादिकर्ता यस्य ससर्वभूतात्मभूतात्मा । यच्चाप्नोतियदादत्तेयच्चात्तिविषयानिह । यच्चास्यसंततो भावस्तस्मादात्मेतिभण्यतइतिवचनात् । सर्वभूतात्मनि विष्णौ भूतः स्थितः आत्मा यस्य सइतिवा । कर्माणिकुर्वन्नपि ॥ ७ ॥

पूर्वी सांगितलेल्या कर्मयोग्यास मोक्ष कशा प्रकारें मिळतो तें सांगतात— ज्याचें अंतःकरण शुद्ध झालें आहे, ज्यानें आत्मसंयमन केलें आहे, ज्यानें इंद्रियें स्वाधीन करून घेतलीं आहेत व सर्व प्राणिमात्रांस आदानादिकर्ता ईश्वरच आहे, तोच माझाही नियामक आहे किंवा सर्व प्राणीमात्र त्याचा ( ईश्वराचा ) आश्रय करून आहेत, असें जो समजतो, तो कर्म करीत असला तरीही केलेल्या कर्मानें बद्ध होत नाहीं. ॥ ७ ॥

**नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यन्शृण्वन्स्पृशन्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन् ॥ ८ ॥**
**प्रलपन्विसृजन्गृण्हन्नुन्मिषन्निमिषन्नपि ।**
**इंद्रियाणींद्रियार्थेषु वर्तंत इति धारयन् ॥ ९ ॥**

योगरूपसंन्यासस्यमोक्षहेतुत्वमुक्तम् । तत्र संन्यासस्य योगरूपत्वं केनप्रकारेणेत्यतोयथा संन्यासस्य योगरूपत्वं तथा संन्यासं पुनः स्पष्टयति । नैवाकिंचिदित्यादि श्लोकद्वयेन । परमेश्वरेच्छयेंद्रियाणि विषयेषु वर्ततइति धारयन्स्वातंत्र्याभावान्नाकिंचित्करोमीतिमन्यते ।

उक्तंच । विष्णुनार्थेष्वीरितानि मनआदीनिसर्वशः । वर्ततेन्यो न स्वतंत्र इतिजानाति तत्वविदिति ॥ ८ ॥ ९ ॥

योगयुक्त संन्यास मोक्षास कारण आहे असें पूर्वी सांगितलें; आतां त्या संन्यासाला योगरूपत्व कसें प्राप्त होईल तो प्रकार सांगून संन्यासयोगाचें पुनः स्पष्टीकरण करितातः-इंद्रियें हीं केवळ ईश्वराच्या प्रेरणेनेंच त्यांच्या विषयांच्या ठिकाणीं प्रवर्ततात ( ह्मणजे ईश्वरप्रेरणेनें इंद्रियें विषयांकडे जातात, ) मी त्या ईश्वराचे स्वाधीन असून अस्वतंत्र असल्यामुळें, स्वतंत्रपणानें मला विषयभोग स्वातंत्र्यानें करितां येणें शक्य नाहीं, असा अधिकारी ( तत्वज्ञ कर्मयोगी ) पहात, ऐकत, स्पर्श करीत, वास घेत, जेवीत, चालत, निजत, श्वासोच्छ्वास करीत, बडबडत, टाकीत, घेत, डोळे उघडीत, मिटीत, असला तरी, यांपैकीं कोणतेंही एकसुद्धां कर्म मी स्वतंत्रपणानें करीत नसून, हें सर्व भगवंताच्या आज्ञेनें होतें असें जाणतो ॥ ८ ॥ ९ ॥

**ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥ १० ॥**

योगयुक्त संन्यासवतोमुक्तिर्भवतीति नोपचारइति भावेन पुनः फलमाह ब्रह्मणीति । तत्पूजात्मकानि तत्कृतानि ममशुभार्थमिति ब्रह्मण्याधानम् । स्वातंत्र्याभावापेक्षयैव जीवस्याकर्तृत्वं । स्ववंदनं यथापित्रा कारितं शिशुकर्तृकं । एवं पूजाविष्ण्वधीना भवेज्जीवकृतेत्यपीतिवचनात् ॥ १० ॥

" योगयुक्त संन्याशाला मुक्ति प्राप्त होते " हें ह्मणणें केवळ औपचारिक नव्हे; ह्मणून त्याचें पुनः फळ सांगतात-जो मनुष्य, कर्में ब्रह्मपूजानिमित्तानें आपल्या कल्याणाकरितां करितो, व हीं मी स्वतः करीत नाहीं असें समजतो, तो ज्याप्रमाणें कमळाचें पान पाण्यावर तरंगत असून तें पाण्यानें लिप्त होत नाहीं, त्याप्रमाणें कर्माच्या दोषानी लिप्त होत नाहीं. ॥ १० ॥

**कायेन मनसा बुद्ध्या केवलैरिंद्रियैरपि ।**
**योगिनः कर्म कुर्वंति संगं त्यक्त्वात्मशुद्धये ॥ ११ ॥**

एवंचास्त्याचारइत्याह । कायेनेति । कायादिभिरिंद्रियांतैः केवलैः कामाहंकाररहितैःस्नानध्यानादितत्वनिश्चयादिश्रवणकीर्तनादिकर्माणि संगं फलस्नेहं त्यक्त्वा आत्मनः चित्तस्य शुद्धये जीवस्यान्यथाकारपरित्यागेन स्वरूपाविर्भावाय च कुर्वंति ॥ ११ ॥

याप्रमाणें करण्याचा सांप्रदाय आहे ह्मणून सांगतातः–कर्मयोगी, फळाची इच्छा सोडून, चित्तशुद्धीकरितां शरीरानें करावयाचीं स्नानदानादि कर्में, व मनानें करावयाचीं जपादि कर्में, आणि बुद्धीनें करावयाचीं तत्वनिश्चयादि कर्में, कर्मांचा अभिमान न धरितां इंद्रियांचे–योगानेंही कर्में करितात. ॥ ११ ॥

**युक्तः कर्मफलं त्यक्त्वा शांतिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबद्ध्यते ॥ १२ ॥**

प्राक् संन्यासयोगौ मिलितावेव फलं साधयतोनान्यतरपरित्यागेनान्यतरइति नियमज्ञापनार्थं तयोःफलमुक्तं । इदानींतु तावेव मोक्षसाधनं नतु तदुभयत्यागेनान्यादिति नियमज्ञापनाय योगसंन्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमाह । युक्तइति । युक्तो योगयुक्तः । नैष्ठिकीं स्वाभाविकीं । कामकारेण कामकामतः प्रवृत्त्या ॥ १२ ॥

संन्यास व कर्माचरण हीं दोन्हीं करणाऱ्यालाच मुक्ति प्राप्त होते, व त्यांपैकीं एकाचा त्याग केला तर, फळ प्राप्त होत नाहीं, या अभिप्रायानें त्यांचीं फळें सांगितलीं; आतां, दोहोंपैकीं एकाचेंही आचरण न करणारांस संसारांत पडावें लागतें, ह्मणून सांगतातः–कर्मफळाची इच्छा सोडून, एकनिष्ठेनें ईश्वराचें चिंतन करणारा पुरुष, आपल्या योग्यतेप्रमाणें सालोक्यादि मुक्ति पावतो; व योगरहित ( ईश्वरपराङ्मुख ) आणि कर्माचेठायीं आसक्त असलेला पुरुष, त्या कर्मांनीं बद्ध होऊन संसारांत पडतो. ॥ १२ ॥

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

पुनः संन्यासशब्दार्थं स्पष्टयति । सर्वकर्माणीति । मनसासर्व-कर्माणि संन्यस्य स्वातंत्र्याभिमानं त्यक्त्वा वशी जितेंद्रियः अकुर्वन्न-कारयन्नेव चक्षुःश्रोत्रघ्राणयुग्ममुख पायूपस्थ लक्षण नवद्वारवति देहे सुखं यथाभवति तथास्ते ॥ १३ ॥

संन्यास शब्दाचा अर्थ स्पष्ट करून सांगतातः—मनापासून सर्व कर्मे करून, तीं मी स्वतंत्रपणानें करित नाहीं, असें जाणणारा, इंद्रियें स्वाधीन ठेवणारा, नऊ आहेत द्वारें ह्मणजे मार्ग ज्याला ( डोळे २, नाकपुड्या २, कान २, तोंड १, गुद १, उपस्थ १, एकंदर नऊ द्वारें ) अशा देहाचे ठिकाणीं, मी स्वतंत्र कर्ता नव्हे व करविताही नव्हे असें समजून, सुखानें असतो. ॥ १३ ॥

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

ननु दर्शनादिकं कुर्वन्नेव किंचित्करोमीति मन्येतेत्ययुक्तं । मिथ्याज्ञानस्य विप्रलंभस्य वा प्रसंगादित्याशंकानिरासाय परमेश्वर-प्रेरितः कुर्वन् कारयन्नपि स्वातंत्र्येण न करोति न कारयतिचेत्युच्यत-इत्याह । न कर्तृत्वमिति । जडमपेक्ष्य प्रभुः समर्थोजीवः लोकस्य कर्तृत्वं न सृजति न लोकेन कर्म कारयति स्वयंच कर्माणि न सृजति न करोतीत्यर्थः । कर्मणि स्वातंत्र्यंनचेत्फलेनास्तीति किंवाच्यमित्याह नेति । सृजतीत्यनुषंगः । तर्हि तस्य कर्मयोगे प्रवृत्तिर्नस्यादित्यतआह । स्वभावस्त्विति । स्वः स्वतंत्रः परमात्मा । स्वातंत्र्यात्स्वइतिप्रोक्त इत्युक्तेः । तेनैव सदा स्वयंभवति भावयति चान्यानीतिस्वभावः । तथा स्वतंत्रं भावयति ध्यायतीति स्वभावः । स्वतंत्रःपरमात्मा सएव-मद्गतः स्वयं करोतीति नाहं स्वातंत्र्येण किंचित्करोमि तत्प्रसादात्त-दायत्तकर्मणैवाहं विहितकृदिति भावयन्नेव स्वविहितकर्मयोगे प्रवर्तत-इतिभावः ॥ १४ ॥

स्वतः दृष्टीनें पहात असून, तें आपण पहात नाहीं असें कोणी ह्मणेल तर त्यास भ्रांति पडली आहे किंवा मिथ्याज्ञान झालें आहे, असें ह्मणावें

लागेल; त्या अर्थी परमेश्वरच प्रेरक असून सर्व कर्ता करविता तोच आहे. मनुष्याला स्वतंत्रपणानें कांहींच करतां येत नाहीं व करविता येत नाहीं त्यामुळें जीवांनीं स्वतः पाहिलें तरी पहात नाहीं असें ह्मणवितो. या अभिप्रायानें सांगतात—ज्यापेक्षां ( जडापेक्षां ) समर्थ असलेला हा जीव, लोकांकडून स्वतंत्रपणानें कर्में करवीत नाहीं, किंवा आपणही स्वतंत्रपणानें करीत नाहीं, त्याप्रमाणेंच, त्या कर्मांचें फळही लोकांस स्वतंत्रपणानें देत नाहीं किंवा त्यालाही स्वतंत्रपणानें मिळत नाहीं. तर मग हें कोण करवितो? तर, स्वातंत्र्य असल्यामुळें ' स्व ' शब्दवाच्य जो परमात्मा, तो सर्व जीवांत राहून, कर्में करवितो किंवा करितो; कर्मांचें फळ देणाराही तोच. त्या ( परमात्म्या ) वांचून स्वतंत्रपणानें कोणालाच कांहीं करितां येत नाहीं. ॥ १५ ॥

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः ॥ १५ ॥**

एवं प्रवर्तमानस्य फलमाह । नादत्तइति । जडमपेक्ष्य विभुर्जीवो न कस्यापि कर्मणः फलं पापं पुण्यं वा आदत्ते । किमिति तर्हि स्वगतं स्वतंत्रं परमात्मानं प्राणिनो नपश्यंतीत्यत आह । अज्ञानेनेति । अथवा जीवानां स्वातंत्र्याभावेपि परमात्मदत्तस्य कर्तृत्वस्य सद्भावात्कथं कर्मणां ब्रह्मण्याधानमित्यत आह । न कर्तृत्वमिति । कर्माण्यदृष्टानि । क्रियायामदृष्टोत्पादने फलेचास्वातंत्र्यं लोकस्य न सृजति ईश्वरः । अतएव यथाराजा स्वपुत्रादिभ्यः स्वराज्यवित्तभोजिभ्योप्याधिपत्यादानाद्राज्यं न ददातीत्युच्यते तथा कर्मफलादिसंयोगिनोपिकर्तृत्वादिकं न सृजतीत्युच्यते । स्वयमेव भवति भावयतिचेति स्वभावोभगवान् । स्वभावत्वात्स्वयमेव कर्तृत्वादिषु प्रवर्तते । स्वातंत्र्यादेव विभुः ईश्वरः कर्मफलं पापादिकं नादत्त इत्यादिव्याख्येयं । तदुक्तं । स्वातंत्र्याद्भगवान्विष्णुः स्वभस्वइतिकीर्तितः । तत्स्वातंत्रं कदाप्येष नान्यस्य सृजति क्वचित । स्वातंत्र्यादेवपापादि संबंधः कुर्वतोपि न । अज्ञानावृतबुद्धित्वादीदृशं तं न जानतइति । स्वातंत्र्याधानमेव कर्माधानमित्याशयः ॥ १५ ॥

याप्रमाणें जे जाणतात त्यांस काय फळ मिळतें तें सांगतात—जडापेक्षां समर्थ असलेला जीव, कोणत्याही कर्माचें फळ पापपुण्य स्वातंत्र्यानें आपण घेत नाहीं; ईश्वरच सर्वत्र राहून स्वतंत्रपणानें सर्व करितो असें जर आहे तर, त्याच्या हृदयांत रहाणारा परमात्मा त्याला कां दिसत नाहीं? याचें कारण एवढेंच कीं, या जीवाचें ज्ञान अज्ञानानें आच्छादिलेलें आहे ह्मणून, अज्ञानानें मोहित होऊन, तो परमात्म्याला पाहूं शकत नाहीं. अथवा जीवाचेठायीं ईश्वरानें दिलेलें दत्तस्वातंत्र्य असल्यामुळें, त्याच्या त्याच्या अदृष्टाप्रमाणें त्याजकडून कर्में करवितो, आणि त्यांकडून त्या कर्मांचीं फळेंही भोगवितो. परंतु, कोणतेंही कर्म स्वतंत्रपणानें करण्याची शक्ति त्याला देत नाहीं. ज्याप्रमाणें राजाचें वैभव, त्याच्या आज्ञेनें त्याच्या पुत्रास उपभोगितां येतें, परंतु, त्या राजपुत्राला स्वतंत्रपणानें राज्यकारभार, राजा करूं देत नाहीं, त्याप्रमाणें ईश्वर, जीवाला स्वातंत्र्य देत नाहीं, ईश्वर स्वतंत्र असल्यामुळें त्या ( जीवा ) चें पाप किंवा पुण्यही त्या ( ईश्वरा ) ला लागत नाहीं. ॥ १५ ॥

## ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
## तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥

ननु ज्ञानस्याज्ञानेनावृतत्वे सत्यज्ञानस्यनाशकांतराभावात् ज्ञानार्थयोर्योगसंन्यासयोर्वैयर्थ्यमित्याशंक्य स्वरूपज्ञानमविद्यावृतं वृत्तिज्ञानं त्वविद्यांशिथिलयति प्रकाशयति च परब्रह्मेत्याह । ज्ञानेनेति । आत्मनोभगवतो ज्ञाने आत्मनः परमेश्वरात् तत्प्रसादात् नाशितमिति वा संबंधः । अंतःकरणवाचिना आत्मशब्देन ज्ञानशब्दयोः संबंधे वृत्तिज्ञानमुक्तं भवति । तृतीयांतज्ञानशब्देन परोक्षज्ञानमुच्यते । प्रथमांतेन च साक्षात्कारः ॥ १६ ॥

ज्ञान हें अज्ञानानें झांकलेलें असतें असें सांगितलें; तर अज्ञानाचा नाश करण्याला ज्ञानाशिवाय दुसरें साधन नसल्यामुळें, ज्ञानार्थ जे संन्यासादि योग साधतात तेही व्यर्थच होतील; या शंकेचें समाधान सांगतात:—स्वरूपज्ञान हें अविद्येनें ( अज्ञानानें ) झांकलेलें असलें तरी, वृत्तिज्ञान त्या अविद्येला शिथिल ( सैल ) करून, ब्रह्मज्ञान उत्पन्न करितें. परमात्म्याच्या प्रसादानें

ज्यांना ज्ञान प्राप्त होऊन त्या ज्ञानानें अज्ञान नाहींसें झालें आहे, त्यांचें तें सूर्यासमान अपरोक्षज्ञान परात्पर अनंत गुणयुक्त अशा परमेश्वरास दाखवितें. ।१६।

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छंत्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

अपरोक्षज्ञानोत्पत्तौ ध्यानादिव्यवहितपरोक्षज्ञानंविनान्यदप्यव्यवहितं साधनमाह । तद्बुद्धयइति । न सकृद्भगवत्परोक्षज्ञानेन चरितार्थता किंतु पुनस्तत्रबुद्धिर्येषांते तद्बुद्धयः । स आत्मा आदानादिकर्ता स्वामी वा येषां ते तदात्मानः । तस्मिन्निष्ठा स्थितिः आपद्यपि तस्मादचलनं येषां ते तन्निष्ठाः । स एव परमायनं येषां ते तत्परायणाः । चक्षुराद्याश्रितावयमितिध्यायिनइत्यर्थः एतच्च देवताविषयं । स्वोत्पत्त्यंगंतु देवानां विष्णोश्चित्यं सदैव तु। तेषांतत्र प्रवेशोहि मुक्तिरित्युच्यते बुधैरितिवचनात् । यद्वा स एव परोयेषां ते तत्पराः ते अयनं येषां ते गुर्वादित्वेन तत्परायणाः । तेच अपरोक्षज्ञान निर्धूतपापा अपुनरावृत्तिलक्षणां मुक्तिं गच्छंति ॥ १७ ॥

ज्यांची ईश्वराचेठायींच निश्चयात्मक बुद्धि आहे, परमात्म्याचेठायींच ज्यांचें मन लागलें असून तोच आपला स्वामी असें समजणारे, आपत्कालीं सुद्धां भक्तीपासून न चळणारे, मुख्य काय तो परमात्माच आहे असें ज्ञानानें पहाणारे, ते अपरोक्षज्ञानाचे योगानें पापरहित होऊन, ज्याला पुनरावृत्ति—जन्ममरणाचे फेरे—नाहीं, अशा मोक्षास जातात. ॥ १७ ॥

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥ १८ ॥**

परमेश्वरस्वरूपाणां सर्वत्रसाम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह । विद्येति । पंडिताः परोक्षज्ञानिनः । पांडित्यमागमज्ञानमितिवचनात् । ब्राह्मणादिषु स्थितं ब्रह्म समंपश्यतीति समदर्शिनः १८

सर्व उच्च नीच देह धारण करणाऱ्या सर्व जीवांच्या अंतर्गत भगवद्रूपें सर्वही गुणादिकेंकरून समान आहेत, असें समजणें हेंही अपरोक्षज्ञानप्राप्तीचें एक साधन आहे, ह्मणून सांगतातः—विद्या आणि विनय ( नम्रता ) यांनीं

युक्त असा ब्राह्मण, किंवा गाय, हत्ती, कुत्रा व चांडाळ इत्यादिकांचे ठिकाणीं सर्वांतर्यामीं ईश्वर स्वरूपअंशानें आहे, त्यामध्यें परस्पर भेद किंवा भेदाभेद कांहीं नाहीं, असें ज्ञानी समजतात. ॥ १८ ॥

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥**

तदेवस्तौति । इहैवेति । येषां मनः परमेश्वररूपाणां साम्ये स्थितं तैरपीहास्मिन्नेवजन्मनि सर्गो जन्मादिरूपः संसारः परोक्षज्ञाना-द्विजितः । समदर्शिनइति दृश्यत्वेनोक्तं वस्तु कथं समं भवेदित्यपेक्षाया-माह । निर्दोषमिति । उक्तंच । विषमेष्वपिजीवेषु समोविष्णुः सदैव तु । यत्तृणादिगतस्यापि गुणाः पूर्णाहरेः सदेतिहि । ते ज्ञानिनः संसारं जित्वा तस्माद्ब्रह्मणः तदनुग्रहात् ब्रह्मणि स्थितः निर्दुःखानंदात्मिकां स्वास्थितिं प्राप्ताः ॥ १९ ॥

असें जाणणाऱ्या ज्ञान्यास फळ काय मिळतें तें सांगतात:—निर्दोष असें ब्रह्म सर्व गुणादिकेंकरून सर्वत्र सम आहे, त्या सर्व रूपांत भेद मुळींच नाहीं, असें ज्याचें मन स्थिर झालें आहे त्यानें येथेंच ( या लोकींच ) जन्म-मरणरूप संसार जिंकला असें समजावें; तो ज्ञानी परब्रह्म प्रसादानें ब्रह्मनिष्ठ होऊन, नित्यसुख जींत आहे, अशा मुक्तीस जातो. ॥ १९ ॥

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥२०॥**

संन्यासयोगज्ञानानि मिलित्वा प्रपंचयत्यध्यायशेषेण । सर्वत्र पुनःपुनरुक्तार्थप्रपंचनमनुक्तानां विशेषणानां संग्रहार्थमिति बोद्धव्यं । तत्र संन्यासं प्रपंचयति । नप्रहृष्येदिति ॥ २० ॥

जो प्रिय ( आवडती ) वस्तु मिळाली असतां हर्षित होत नाहीं, व नावडती वस्तु मिळाली असतां दुःखित होत नाहीं. आपण परमात्म्याच्या अधीन आहे. अशी ज्याची बुद्धि स्थिर झाली आहे, मोह न पावणारा असा ब्रह्मवेत्ता. ॥ २० ॥

**बाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥**

पुनर्योगस्याधिक्यं संन्यासात्स्पष्टयति । बाह्यस्पर्शेष्विति । कामरहितआत्मनि यत्सुखं विंदति । स एव ब्रह्मयोगयुक्तात्माचेत् तदेवाक्षयं सुखं विंदति । ब्रह्मविषयोयोगो ब्रह्मयोगः । यद्यपि कामाद्युपद्रवक्षयेऽपि ईषत्तात्कालिकमात्मसुखं व्यज्यते तथापि तस्य संसारनिवृत्तौ स्वरूपभूतस्याक्षयसुखस्याभिव्यक्तेः संन्यासाद्वरः कर्मयोगइत्युक्तंभवति। यद्वा योगरूपसंन्यासस्य निःश्रेयसकरत्वमनेनोपपाद्यते । यदा संसारेऽपि परमात्मस्मरणाद्यल्पयोगयुक्तः संन्यासी सुखं विंदति तदा ध्यानादिमहायोगयुक्तोमोक्षादिसुखंविंदतीति किमुवक्तव्यमित्यर्थः २१

जो मनुष्य बाह्य शब्दादि विषयांचेठायीं आसक्त नसून, आपल्याठिकाणीं जें सुख मानतो तोच ज्ञानयोगयुक्त ध्यानानें, ज्याचा कधींही नाश व्हावयाचा नाहीं, असें अखंड सुख पावतो. ॥ २१ ॥

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**अद्यंतवंतः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥**

संन्यासार्थं कामभोगं निंदति । येहीति । संस्पर्शजाः विषयसंबंध संभवाः । दुःखकारणानि उत्पत्ति नाशवंतः ॥ २२ ॥

संन्यासाकारितां ऐहिक विषयांची निंदा कारितातः—हे कुंतिपुत्रा अर्जुना, जीं खरोखर विषयांपासून उत्पन्न होणारीं सुखें, तीं दुःख उत्पन्न करणारीं व ज्यांस उत्पत्ति व नाश आहे अशींच असतात; ह्मणून तीं सुखें प्राप्त झालीं असतां ज्ञानी लोक आनंद मानीत नाहींत. ॥ २२ ॥

**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥**

संन्यासार्थमेव कामभोगपरित्यागं प्रशंसति । शक्नोतीति । यः कामक्रोधोद्भवं वेगं मनसोऽनवस्थानं सोढुं शक्नोति स युक्तः स सुखी इहैव शरीरविमोक्षणात् प्रागिति यथा मनुष्यशरीरे सोढुं सुशकं न तथान्यत्र । ब्रह्मलोकादिस्तु जितकामानामेव भवति । अतोऽत्रैव तत्सहनाय प्रयतितव्यमिति भावः ॥ २३ ॥

संन्यासप्राप्तीकरितां ऐहिक विषयांचा त्याग करावा, ह्मणून सांगतातः—

जो पुरुष इच्छा व राग यांपासून उत्पन्न झालेल्या वेगास मरण येण्याच्या पूर्वीच सहन करण्यास समर्थ होतो, तो पुरुष ज्ञाननिष्ठ होय. तोच सुखी समजावा. ॥ २३ ॥

**योऽन्तःसुखोऽन्तरारामस्तथांतर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥**

ज्ञानिलक्षणं प्रपंचयति । योंतःसुखइत्यादिभिः । आरामः परमात्मदर्शनादिनिमित्तंसुखं । सुखं कामाद्युपद्रवक्षये व्यक्तं । उक्तंच । दर्शनस्पर्शसंभाषाद्यत्सुखंजायतेनृणां । आरामः सतु विज्ञेयः सुखंकामक्षयोदितमिति । अंतःसुखः कामक्षयाभिव्यक्तात्मसुखः अंतरारामः परमात्मदर्शनादिहेतुकसुखवान् । अंतर्ज्योतिः अंतरभिव्यक्तपरमात्मरूपः । असंप्रज्ञातसमाधीनां बाह्यदर्शनव्यावृत्त्यर्थस्तदन्यज्ञानिनां बाह्यदर्शनेऽपि चित्तविक्षेपाभावाद्ब्रह्मदर्शनापेक्षया बाह्यदर्शनप्राचुर्यव्यावृत्त्यर्थ एव शब्दः । सच सामर्थ्याज्ज्योतिषैव संबध्यते । केषांचिद्बहिरपि ब्रह्मदर्शनात् । पुनर्यइति सर्वत्रानुगमार्थः । अंतःसुखत्वादेः कारणं ब्रह्मणिभूतइति । सोप्राकृतविग्रहं भगवंतं प्राप्नोतीत्यर्थः ॥ २४ ॥

ज्ञान्याचें लक्षण विस्तारानें सांगतातः—जो मनुष्य विषयसुख तुच्छ मानून, सुखी असलेला व हृदयांत परमात्म्याच्या दर्शनसुखांत निमग्न असलेला व असंप्रज्ञातसमाधि लावणारा तोच ब्रह्मनिष्ठ; तो चिदानंदस्वरूपी परमात्म्यातें पावतो; त्यास बाह्य विषयांचें दर्शन झालें तरी, त्याची वृत्ति चंचळ होत नाहीं. ॥ २४ ॥

**लभंते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।**
**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥**

पापक्षयाच्चैतद्भवतीत्याह । लभंत इति । क्षीणकल्मषाभूत्वा छिन्नद्वैधायतात्मानः द्वैधीभावोद्वैधं संशयोविपर्ययोवा छिन्नं द्वैधं येषांते छिन्नद्वैधास्तएवायतात्मानः । आयतात्मत्वं दीर्घमनस्कत्वं तत्छिन्नद्वैधत्वेहेतुः । तदुक्तम् । विपर्ययः संशयोवा यद्वैधंत्वत्कृतात्मनां ।

ज्ञानासिना तु तच्छित्वा मुक्तसंगः परंव्रजेदिति । छिन्नद्वैधाः यतात्मानइति पदद्वयं वा ॥ २५ ॥

वर सांगितलेलें ज्ञान पापाचा क्षय झाल्यावांचून होत नाहीं, ह्मणून सांगतातः—ऋषिजन पाप आणि संशय यांनीं रहित होऊन सर्व प्राण्यांच्या हिताविषयीं तत्पर असून, परमात्मादि तत्वें त्या त्या तारतम्याप्रमाणें जाणणारे व ज्यांच्या मनाचा निग्रह झाला आहे असे ज्याला नाश नाहीं अशा ब्रह्मलोकाप्रत जातात. ॥ २५ ॥

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥**

सुलभंच तेषांब्रह्मेत्याह । कामक्रोधेति । अभितः सर्वतः ॥२६॥

आत्मस्वरूपाची ज्यांना चांगली ओळख झालेली आहे, मनोनिग्रही, इच्छा व क्रोध यांचा ज्यांना वियोगच झालेला आहे, असे जे योगी ( यति, ब्रह्मनिष्ठ, ) त्यांना, मेल्यावर व जिवंतपणींही जीवन्मुक्ति प्राप्त होते. त्यांना सर्व देशकालाचेठायीं भगवान् प्रत्यक्ष असतो. ॥ २६ ॥

**स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवांतरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यंतरचारिणौ ॥२७॥**

ब्रह्मयोगादिपदेन ध्यानं प्रकृतं तत्कारणमाह । स्पर्शानिति । स्पृश्यंत इति स्पर्शाविषयाः । बाह्यान् स्पर्शान् बहिः कृत्वा श्रोत्रादीनि योगेन नियम्येत्यर्थः चक्षुःभ्रुवोरंतरे कृत्वा भ्रुवोर्मध्यमवलोकयन्नित्यर्थः । उपलक्षणमेतत् । संप्रेक्ष्य नासिकाग्रं स्वमिति वक्ष्यमाणत्वात् । प्राणापानौ समौसमानौ कृत्वा कुंभके स्थित्वेत्यर्थः ॥ २७ ॥

आतां योग कसा करावा तें सांगतातः—शब्दस्पर्शादि बाह्यविषयांस मनांत न घेतां बाहेरच ठेऊन, दोन्ही भिंवयांच्या मध्यभागीं दृष्टि ठेऊन, ( कारण, डोळे पूर्ण झांकले तर झोंप येईल व ते पूर्ण उघडे ठेविले तर, बाह्य विषयांवर दृष्टि जाईल ह्मणून अर्धे डोळे मिटून. ) नासिकामध्यें संचार करणारे प्राण आणि अपान वायु यांस सम करून, ह्मणजे खालीं वर जाऊं न देतां—कुंभकांत ठेवून मंद श्वासानें संचरण करावें. ॥ २७ ॥

यतेंद्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥२८॥

मुक्तएव स इतिश्रुतिः मुक्तसदृशः स्याद्वामुक्तः । उक्तंच । अमुक्तोमुक्तसादृश्यान्मुक्त एव हि तत्त्वदृक् । किमु मुक्तिगतस्तस्माज्ज्ञानमेवाधिकंनरे इति ॥ २८ ॥

असा योगी इंद्रियें, मन व बुद्धि स्वाधीन ठेवणारा व मोक्षच परमसुख ह्मणून जाणणारा सर्वदा तत्पर असतो; याप्रमाणें इच्छादिकांचा ज्यानें त्याग केला आहे, तो जीवंत असला तरी मुक्तासारखा समजावा. ॥ २८ ॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शांतिमृच्छति ॥२९॥

इति श्रीभगवद्गीता सूपनिषत्सु ब्रम्हविद्यायां
योगशास्त्रे श्रीकृष्णार्जुन संवादे
कर्मसंन्यास योगोनाम
पञ्चमोऽध्यायः ॥५॥

ध्येयमाह । भोक्तारमिति ज्ञात्वेत्यस्य ध्यात्वेत्यर्थः । शांतिसाधनत्वमपि भोक्तृत्वादिवत् ध्येयविशेषणमेव । एवं सर्वत्राप्रसिद्धोपादानं द्रष्टव्यम् ॥ २९ ॥

इति श्रीमद्भगवद्गीताविवृतौ विद्याधिराजभट्टोपाध्यायविरचितायाम् श्रीमध्वमतानुवर्तिनी
व्याख्योपेतायाम् पंचमोऽध्यायः ॥५॥

आतां ध्यान कसें करावें तें सांगतातः—यज्ञ व तपश्चर्या यांचा उपभोक्ता, सर्व लोकांचा नियंता ईश्वर, सर्व भूतांचा अनिमित्त ( निरपेक्ष ) मित्र, असा आहे असें जाणणारा परमसुखाचें स्थान, जी मुक्ति तिची प्राप्ति करून घेतो. यावरून, सर्व जीवांपेक्षां ईश्वर श्रेष्ठ आहे असें जाणल्यानेंच तो परमात्मा कल्याण करितो असें उघड दिसतें. ॥ २९ ॥

येथें श्रीमदिन्दिराकान्ततीर्थ श्रीपादविरचित प्राकृत टीकेचा
पांचवा अध्याय समाप्त झाला.

# अथ षष्ठोऽध्यायः

श्री भगवानुउवाच ।

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥**

श्रीगुरुभ्योनमः । योगेत्विमां शृण्विति प्रतिज्ञातयोगश्च कर्मयोगोध्यानयोगश्चेति द्विविधोभवति तत्र संक्षेपविस्ताराभ्यां कर्मयोगोनिरूपितः । ध्यानयोगप्रकारश्च संक्षेपेण पंचमांतेनिरूपितोविस्तरेणास्मिन्नध्याये उच्यते । प्रकृतं ध्यानमग्न्याधानादिपरित्यागेन निःसंगतया वर्तमानस्य भवतीतिकेचित् तन्निरासार्थमीश्वराराधनस्वकर्मानुष्ठान लक्षणेन योगेन सह ध्यानाधिकारिविशेषणं कामादिवर्जनलक्षणं संन्यासमाह । अनाश्रितइति । यः फलकामनारहितः कर्तव्यं स्ववर्णाश्रमोचित्तं कर्म करोति स संन्यासी च योगी च । निरग्निः संन्यासी योगी च न भवति । आक्रियश्च तथा सब्रह्मनिष्ठस्तुयतिर्महात्माशारीरमग्निंचमुखेजुहोतीत्यादेर्यत्याश्रमस्वीकारकाले पूर्वाश्रमस्वीकृताग्नेरात्मनि समारोपणाद्दैवमेवापरेयज्ञामित्याग्निक्रिययोरभिधानाच्च न यतीनामग्निक्रिययोरभावः । अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबंधन इतिवोद्धव्यं ॥ १ ॥

( योगेत्विमांशृणु ) असें ह्मणून श्रीकृष्णानीं, एक कर्मयोग व दुसरा ध्यानयोग, असे दोन प्रकारचे योग सांगितले; व प्रथमतः संक्षेपानें आणि नंतर विस्तारपूर्वक कर्मयोग सांगितला; पांचव्या अध्यायाचे शेवटीं ध्यानयोगाचें संक्षेपानें निरूपण केलें आहे. त्याचेंच या सहाव्या अध्यायांत विस्तारानें निरूपण करितात. हा ध्यानयोग, अग्निहोत्रादि कर्मांचा त्याग करून निःसंग असलेल्यास साध्य होतो असें कित्येक लोक ह्मणतात, त्याचें निराकरण करण्याकरितां ईश्वराचें आराधन व स्वकर्माचें अनुष्ठान; हीं, ध्यानयोगास योग्य अशा पुरुषानें ( फलांच्या ) इच्छादिकांचा त्याग करून करणें हेंच संन्याशाचें लक्षण आहे ह्मणून सांगतातः—जो अधिकारी फलाची इच्छा न

धरितां, करण्यास योग्य अशीं, स्ववर्णाश्रमोचित कर्में करितो, तोच योगी किंवा संन्यासी होय; केवळ निरग्निक किंवा क्रियारहित अशाला संन्यासी ह्मणत नाहींत; कारण, जो ब्रह्मनिष्ठ तोच संन्यासी, असें श्रुतिआदिकरून सांगतात. बाह्याग्नि नसल्यानें 'अनग्निक' अशी लौकिकगाथा आहे. ॥ १ ॥

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पांडव ।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥**

संन्यासीच योगीचेत्युक्त्या प्राप्तांसंन्यासयोगयोः पृथक् शंकां निवारयति । यमिति । इतिशब्दः पूर्वाध्यायोक्तप्रकारपरामर्शार्थः । योगविशेषएव संन्यासइत्यर्थः । तदेवोपपादयति । नहीति । कामसंकल्पाद्यपरित्यागे कथमुपायवान्स्यादित्याशयः ॥ २ ॥

संन्यासी आणि योगी हे निरनिराळे आहेत असें कोणास वाटेल, ह्मणून सांगतात:-हे पंडुपुत्रा अर्जुना, ज्याला संन्यास ह्मणून ह्मणतात, तोच कर्मयोग असें तूं समज, कारण कर्मफलाच्या इच्छेचा व संकल्पाचा त्याग न करणारा, कोणीही योगी होऊं शकत नाहीं. ॥ २ ॥

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

योगातिशयेन कियंतं कालं कर्म कर्तव्यमित्यत आह । आरुरुक्षोरिति । योगमारुरुक्षोः उपायसंपूर्तिकामस्य कर्म कारणं सन्निधानाद्योगारोहस्येति गम्यते । दृष्टार्थत्वादवघातादिवत्फलपर्यंतमनुष्ठेयमित्यर्थः योगारूढस्य कर्तव्यमस्तिवा नवेत्यपेक्षायामाह । योगारूढस्येति। संपूर्णोपायस्य परमसुखस्येतिशेषः । कारणं शमः भगवन्निष्ठबुद्धित्वं पुनरपि जपादिकं कर्तव्यमित्यर्थः । यद्यपि ज्ञानिसुखस्यासंप्रज्ञातसमाधिःकर्माद्यपेक्षयाप्रधानं कारणं तथापि यदा भोक्तव्योपरमः तदैव सम्यगसंप्रज्ञातसमाधिर्जायते अन्यदा तु भगवच्चरितादौ स्थितिः । तच्चोक्तं । ये त्वां पश्यंति भगवंस्तएव सुखिनःपरं । तेषामेव च सम्यक् च समाधिर्जायते नृणां । भोक्तव्यकर्मण्यक्षीणे जपेन कथयापिवा । वर्तयंतिमहात्मानस्तन्निष्ठास्तत्परायणाइति । अथवा कर्मध्यान-

योगयोर्मध्ये कीदृशोयोगोध्यानार्थिनावश्यमपेक्षितइत्यत आह । आरु-रुक्षोरिति । राजादिकरवदावश्यकतया प्रमितं प्राण्युपकारलक्षणं कर्म-योगफलज्ञानकामस्य ज्ञानकारणमुच्यते । संपूर्णोपायस्य ज्ञानिनः शमोभगवन्निष्ठबुद्धित्वं मुक्तिगतानंदातिशयकारणमुच्यते । तदुक्तम् । नानाजनस्यशुश्रूषा कर्माख्या करवन्मितेः । योगार्थिनातु सा कार्या योगस्थेन हरौ स्थितिम् । तेनापि स्वोत्तमानांतुकार्यान्यैरखिलेष्वपि । भक्तितः करणीयेति विशेषो सिद्ध्यसिध्ययोः । प्राप्तोपायस्तु सिद्ध-स्यात्प्रेप्सुः साधकउच्यते । तस्यप्राण्युपकारेण संतुष्टोभवतीश्वरः । सिद्धोपायेन विष्णोस्तु ध्यान व्याख्यार्चनादिकं । कार्यं नान्यत्तस्य तेन तुष्टोभवति केशवइति । अत्र कर्मपदेन नानाजनशुश्रूषैवोच्यते । नतु संध्यावंदनादि शमपदेन नानाजनशुश्रुषोपशमएवोच्यते । भगव-द्ध्यानादिकंच न संध्यावंदनादि कर्मोपशमः । अतो ज्ञानार्थिनः कर्मा-पेक्षितं ज्ञानिनः कर्मापेक्षितंइत्युक्त्या न निरग्निर्नचाक्रियइतिविरोधो नेति भावः ॥ ३ ॥

योगातिशयानें कोठपर्यंत कर्म करावें? तर, कर्म करणें हा उपाय संपू-र्तिकाम अशास सुलभ सांगितला आहे, ह्मणून कर्म हें दृष्टार्थ असल्यानें ज्याप्रमाणें कोंडा ( तुष ) नाहींसा होईपर्यंत धान्य सडतात, त्याप्रमाणें योग-रूप फलोत्पत्ति होईपर्यंत कर्म करावें, योगारूढ ( ज्ञाननिष्ठ ) अपरोक्षज्ञान्यास मुक्तिगत परमसुख प्राप्त होण्यास, भगवन्निष्ठ असणें हें कारण आहे; आतां पुनः किमर्थ भगवंताचें ध्यानआदिकरून करावें, या ह्मणण्याचें तात्पर्य असें कीं, जरी ज्ञान्याला सुख होण्यास असंप्रज्ञातसमाधि मुख्य कारण आहे तरी, ज्यासमयीं असंप्रज्ञातसमाधिस्थ होण्यास प्रारब्धकर्म प्रतिबंधक आहे त्या काळीं अपरोक्षज्ञानी परमात्म्याची पूजा कथा श्रवण यांतच काळ हरण करतात. अथवा, कर्मयोग व ध्यानयोग यांमध्यें ध्यानयोगाची इच्छा करणारानें कोणता योग अवश्य करावा, याविषयीं श्रीकृष्ण सांगतातः—जसें, राजाला प्रजाजन, त्या त्या काळीं नियमित कर देतात; तसें भगवंतानें नियम ठरविल्याप्रमाणें प्राण्यावर उपकार करणें हें ज्ञानोत्पत्तीस कारण सांगितलें आहे. ज्ञान्यास भगवन्निष्ठता ही, मुक्तिगत आनंदाची अभिवृद्धि करणारी होय; येथें कर्मपदानें

भगवंताला संतोष होईल व लोकांवर उपकार होतील अशीं कर्मे, किंवा भगवंताचें ध्यानादिक करावें हें सांगितलें आहे. यावरून ज्ञान्यास कर्म करण्याची जरूर आहे किंवा क्वचित् उपरमही आहे. या योगानें ( न निरग्निर्नचाक्रियः) यांतील विरोध नाहींसा केला. ॥ ३ ॥

यदा हि नेंद्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

योगारूढस्यलक्षणमाह । यदेति। यदाविषयेषु कर्मसु च प्रयत्नं-विनाप्यननुषक्तः । कथंनानुषज्जते सर्वसंकल्पसंन्यासी संकल्पादिकं सर्वं भगवदधीनमितिज्ञानवान् तदा योगारूढउच्यते ॥ ४ ॥

योगारूढाचें लक्षण सांगतातः-व जेव्हां योगी हा ( कर्माचे ) संकल्पादिक हे भगवंताचे स्वाधीन आहेत असें जाणून, इंद्रियविषयांच्याठायीं किंवा कर्मांच्याठायीं आसक्ति धरित नाहीं, तेव्हां त्याला योगारूढ असें ह्मणतात. ४

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ॥ ५ ॥

सच योगारोहः प्रयत्नेन कर्तव्यइत्याह । उद्धरेदिति । आत्मना मनसा । आत्मानं जीवं आत्मा मनएव आत्मनोजीवस्य बंधुः सएव-जीवस्यरिपुः ॥ ५ ॥

योगारोह प्रयत्नानें करावा ह्मणून सांगतातः—मनेंकरून या जीवाचा उद्धार करावा; त्यास अधोगतीस जाण्यास योग्य असा कदापि करूं नये. या जीवास शत्रु किंवा मित्र मन हेंच आहे. ॥ ५ ॥

बंधुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

कीदृशं मनः । कीदृशस्य जीवस्य बंधुः रिपुश्चेत्यत आह । बंधु-
येनात्मना जीवेन कर्त्रा येन जीवेन बुद्ध्या करणेन वा ।
: । मनोजितं । तस्यात्मनोजीवस्यात्मामनोबंधुः । यथा-

सन्नपि भृत्योभृत्यकार्यमकुर्वन्नभृत्यः । तथासन्नपि आत्मामनोयस्यानुपकारीत्यनात्मा । तस्यासन्मनस्कस्य पुरुषस्यात्मा मनएव शत्रुवच्छत्रुत्वेऽपकार करणे वर्तते । मनएव मनुष्याणां कारणंबंधमोक्षयोः । बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतमितिश्रुतिः । अथवा योगारोहस्य भगवत्प्रसादो मुख्यसाधनमित्याह । उद्धरेदित्यादिना । पूर्वं येनात्मशब्देनमनोभिहितं तेनेदानीं भगवानुच्यते । उक्तंच । उद्धरेतैव संसाराज्जीवात्मानं परात्मना । विष्णुर्बंधुः सतां नित्यं परात्माह्यसतामरिः । तत्प्रसादजयाभक्त्या जितोयस्यवशेत्विति । वर्तते तस्य मित्रं सः तदन्यस्य च शत्रुवदिति ॥ ६ ॥

कारण ज्या जीवानें बुद्धीच्या योगानें मनोजय केला आहे, असें तें मन, त्या जीवाचा मित्र होय; चाकर हा आपल्या धन्याचें काम करीत नसेल तर तो चाकर कशाचा? तसेंच, जो आत्मा ( मन ) आपल्या जीवाच्या उद्धारास उपयोगीं पडत नाहीं, तो अनात्मा होय. ज्यानें आपलें मन जिंकिलें नाहीं, त्याला तें ( मन ) च शत्रूप्रमाणें अपकार करितें. पुरुषाला विषयासक्त करून, बंधनाला कारण हें मनच होय; अथवा, तें ( मन ) च त्याची विषयवासना नाहींशी करून, मुक्ति मिळण्याला कारण होतें. अथवा, योगारोहणाला भगवंताचा प्रसादच कारण आहे, अशाविषयीं सांगतातः—वरील अर्थांत जेथें “ आत्मा ” शब्दानें मन असा अर्थ घेतला आहे, तेथें परमात्म्याच्या प्रसादानें हा जीव मुक्त होतो व अन्यथा ( भगवत्प्रसाद न झाल्यास ) बद्ध होतो, हें उघड दिसतें आहे. ॥ ६ ॥

**जितात्मनः प्रशांतस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥**

जितात्मनः फलमाह । जितात्मनइति । जितात्मत्वादेव प्रशांतस्य प्रायोविषयानुन्मुखमनसः परमात्मा सम्यक् हृद्याहितः सन्निहितोभवति । परमात्मापरोक्षज्ञानं भवतीत्यर्थः । अपरोक्षज्ञानिनोलक्षणं स्पष्टयति । शीतोष्णेत्यादिना । शीतोष्णादिषु कूटस्थः कूटमाकाशः कूटःखंविदलंव्योमसंधिराकाशउच्यतइत्यभिधानात् । तद्वत् स्थितो निर्विकार इत्यर्थः ॥ ७ ॥

जितेंद्रिय पुरुषास काय फळ मिळतें तें सांगतातः—ज्यानें मनोजय केला आहे असा, इंद्रियांच्या विषयोपभोगाविषयीं पराङ्मुख होतो त्यायोगानें त्याच्या हृदयांत परमात्मा श्रीहरी वास करितो, तोच अपरोक्षज्ञानी होय; ह्मणून सांगतात- जो शीतोष्ण, सुखदुःख, मानापमान, हे सहन करितो, तो जितात्मा आहे असें जाणावें. याविषयीं पुढील श्लोकांत सांगतात. ॥ ७ ॥

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेंद्रियः ।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः ॥ ८ ॥**

तत्र हेतुः । ज्ञानविज्ञानतृप्तात्मा विजितेंद्रियः । ज्ञानं सामान्यज्ञानं । विज्ञानं विशेषज्ञानं । सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमितीर्यते । तद्विशेषपरिज्ञानं विज्ञ नमिति गीयतइत्युक्तेः । ताभ्यां संतुष्टं मनोयस्येति तथायोगी योगं कुर्वन् । युक्तो योगसंपूर्णः । एवंभूतो योगानुष्ठिता योगसंपूर्णउच्यतइत्यर्थः ॥ ८ ॥

ज्ञान ह्मणजे विष्णु श्रेष्ठ आहे असें सामान्यतः जाणणें, व विज्ञान ह्मणजे विशेष महात्म्यातिशयानें विष्णु हा सर्वोत्तम आहे असें जाणणें; या दोन्ही ज्ञानाच्या योगानें ज्याचें चित्त संतुष्ट आहे, किंवा जो आकाशासारखा विषयांपासून अलिप्त आहे, त्याला योगसंपूर्ण असें ह्मणतात. ज्याला मातीचें ढेंकूळ, दगड, आणि सोनें, हीं बुद्धीनें सारखींच दिसतात, त्यालाच योगसंपूर्ण ह्मणावें. ॥ ८ ॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

सएवसुहृदादिषु समबुद्धिः सर्वस्माद्विशिष्यते । प्रत्युपकारानपेक्षयोपकारकृत्सुहृत् । क्लेशस्थानं ज्ञापयित्वा यो रक्षां करोति स मित्रं । अरिः वधादिकर्ता । कर्तव्ये उपकारेऽपकारे च यउदास्ते स उदासीनः। कर्तव्यमुभयमपि यःकरोति स मध्यस्थः अप्रियकृत्द्वेष्यः । उक्तंच । अनिमित्तस्नेहवांस्तु सुहृत् ज्ञात्वोपकारकृत् । मित्रंवधादिकृदरिर्द्वेष्यस्त्वप्रियमात्रकृत् । उदासीनः स्नेहवतोप्यस्नेही तत्कृतानुकृत् । मध्यस्थ

इतिविज्ञेयः सुहृदेषु विशिष्यतइति। बंधुर्देहसंबंधी। साधुःसाधुधर्मवान्। पापःपापवान्। स्वभावतस्त्रिधा जीवाउत्तमाधममध्यमाः। उत्तमास्तत्र-देवाद्यामर्त्याद्याश्चैव मध्यमाः। अधमा असुराद्याश्च नैषामस्त्यन्यथाभवः। शरीरमात्रान्यथात्वे स्वजातिं पुनरेष्यतीति। सर्वंचेश्वरतः स्तेषां न किंचित्स्वतएवतु। समाएव ह्यतःसर्वेवैषम्यं भ्रांतिसंभवमित्याद्युक्त-प्रकारेण सुहृदादिषु जीवचैतन्यस्योत्तममध्यमाधमरूपस्योत्तमादिरूपत्व-मेव स्वाभाविकं वैषम्यं भ्रांतिजमितिज्ञानं। तथासुहृदादिषु स्थितस्य भगवतः सुहृत्वादेस्तन्निमित्तकत्वस्य च साम्येन ज्ञानं समबुद्धित्वं। यस्य यत्र यथावृत्तिर्विहितावर्तनं तथा। ज्ञानं चापिसमत्वं तद्विषमत्वमतो-न्यथा। यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च। तथा करोति पूजादि समबुद्धिः सउच्यतइत्याद्युक्तप्रकारेण वा समबुद्धित्वं नतु सुहृदादीनां पूजासाम्यं। समानां विषमा पूजा विषमानां समा तथा। क्रियते येन देवोपि स्वपदाद्भ्रश्यते हिसइतिदोषस्मरणात्॥ ९॥

मागें सांगितलेला योगी हा समबुद्धि असला तर, तो सर्वांपेक्षां श्रेष्ठ ह्मणवून घेतो; तो प्रकार असा आहे कीं, प्रत्युपकाराची ( आपण केलेल्या उपकारांची दुसऱ्यानें फेड करावी, ही ) इच्छा नसून, जो उपकार करितो, त्यास सुहृद् ह्मणतात; अमुक एक गोष्ट केल्यानें दुःख प्राप्त होईल ह्मणून सांगून जो त्यापासून रक्षण करितो, त्यास मित्र असें ह्मणतात; आपला नाश करणारा शत्रू होय; करण्यास योग्य असे उपकार किंवा अपकार जो करीत नाहीं, तो उदासीन होय. कर्तव्यकर्म ह्मणून जो उपकार किंवा अपकार करितो तो मध्यस्थ जाणावा! आपणास जो पीडा देतो ( आपलें अहित करितो ) तो द्वेषी जाणावा! देहसंबंधानें जो प्रिय असतो तो बंधु जाणावा; आपल्यास योग्य असें कर्म करणारा तो साधु जाणावा; अनुचित ( अयोग्य ) कर्म करणारा तो पापी जाणावा; स्वभावतः जीव हे उत्तम, मध्यम व अधम या भेदानें तीन प्रकारचे आहेत; उत्तम देवादिक जाणावे; मध्यम मनुष्यादिक जाणावे; आणि अधम असुरादिक जाणावे. यांचें स्वरूप कदापिही पालटत नाहीं. एखाद्या शापादिकाचे योगानें शरीर मात्र पालटतें, तरी पुनरपि त्यांचें शरीर त्यांस प्राप्त होतें. हे सर्व स्वभाव ईश्वरापासूनच प्राप्त

झालेले आहेत, त्याशिवाय त्यांना कधींही प्राप्त होत नाहींत. ह्मणून ते जीव, ज्यांच्या त्यांच्या स्वभावाप्रमाणेंच असतात. असें जाणणारा समबुद्धि होय. विषमत्व हें भ्रांतीपासून उत्पन्न होतें; किंवा, त्या त्या जीवांत रहाणारा परमात्मा त्याकडून, सुहृत्वादि संबंधानें सुखदुःखादिक देतो; असें जाणणें हें, समत्व होय; अथवा सुहृदादिवर्गांत ज्याचा जसा सत्कार वगैरे केला पाहिजे, तसा करणारा तोच समबुद्धि होय; त्यावांचून सर्वांस दानमानादिकांविषयीं समान मानणाराला समबुद्धि ह्मणत नाहींत. कारण, योग्यतेस समान आहेत अशा लोकांना विषम ( त्यांच्या योग्यतेहून कमी ) पूजा करणें किंवा विषम योग्यतेच्या लोकांना समपूजा ( सर्वांस सारखी ) करणें हें केवळ अनुचित असल्यामुळें, देवसुद्धां, अशा ( विरुद्ध ) आचरणानें आपल्या पदापासून भ्रष्ट होतात; ह्मणून ज्याच्या त्याच्या योग्यतेला शोभेल असें कर्म करणें योग्य होय, असें जाणणें हेंच समबुद्धित्व होय. ॥ ९ ॥

## योगी युंजीत सततमात्मानं रहसि स्थितः ।
## एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

**समाधियोगप्रकारमाह । योगीयुंजीतेत्यादिना । आत्मानं मनो- युंजीत समाधियोगयुक्तं कुर्यात् । सततं निरंतरं रहसि एकांते स्थितः सन् । एकाकी संगशून्यः । अनेन बाह्ययोगांतरायान्निवारयति । नियमरूपेण तप आदिना शुद्धौ मनोदेहौ यस्य स यतचित्तात्मा । निराशीः दृष्टश्रुतविषयवितृष्णः अपरिग्रहइत्यहिंसादि यमांतराणामप्युपलक्षणम् ॥ १० ॥**

आतां समाधियोगाचा प्रकार सांगतातः—एकांतस्थळीं राहून, भवबंध मोचक उपायांनींयुक्त असा योगी, निःसंग ( सर्वसंग परित्यागी ) होऊन अंतःकरण ( मन ) स्वाधीन ठेवून, विषयांचे आशेपासून रहित, ( विषयांची इच्छा न करणारा ) आणि अहिंसक ( हिंसा न करणारा ) अशा योग्यानें निरंतर आपलें मन समाधियोगयुक्त करावें. त्याचा प्रकार पुढील श्लोकांत सांगतात. ॥ १० ॥

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥**

शुचौदेशइति । मनःप्रसादहेतुभूतदेशोपलक्षणं । तमेव देशं सेवेत तं कालं तामवस्थितिं । तानेव भोगान्सेवेत मनोयत्र प्रसीदति । न हि देशादिभिः कश्चिद्विशेषः समुदीरितः । मनः प्रसादनार्थं हि देशकालादि चिंतनमितिवचनात् । आत्मनः आसनं प्रतिष्ठाप्य कीदृशं स्थिरं अचलं । नातीवोन्नतं नचातिनीचं । चैलं वस्त्रं अजिनं व्याघ्रादिचर्म । कुशादर्भाउत्तरायस्मिंतथोत्तरं । समग्रादासनप्रदेशात् साक्षादुत्तरत्वायोगात् बुध्याविभक्तस्योत्तरोत्तरनिर्दिष्टस्य बुद्धिसंन्निहितत्वात्साक्षादुत्तरत्वं पूर्वनिर्दिष्टस्य व्यवहितत्वात्परंपरयोत्तरत्वं द्रष्टव्यं । ११

मनाची प्रसन्नता होण्यास योग्य अशा पवित्र स्थळीं, पूर्वेस अथवा उत्तरेस अग्रें करून, दर्भ घालावे. फार उंच नाहीं व फार नीच नाहीं असें, आसन तयार करावें, व त्यावर कृष्णाजिन (व्याघ्र, हरीण इ० उक्त पशूंचें चर्म) घालून त्यावर वस्त्र घालावें—॥ ११ ॥

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥ १२ ॥**

तत्र तस्मिन्नासने उपविश्येति पद्मासनस्वस्तिकासनादिष्वन्यतमस्मिन् स्थिरे सुखे आसने उपविष्टस्यैव समाधिसिद्धिरिति दर्शयति । तदुक्तं । स्मरणोपासनं चैव ध्यानात्मकमितिद्विधा । स्मरणं सर्वदा योग्यं ध्यानोपासनमासने । नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यतेबुधैः । आसीनस्य भवेत्तत्तु न शयानस्य निद्रया । स्थितस्य गच्छतोवापि विक्षेपस्यैव संभवात् । स्मरणात्परमं ज्ञेयं ध्यानं नास्त्यत्रसंशयइति । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तवृत्तयस्तत्र समाध्यंतरंगभूता चतुर्थी मनोवृत्तिर्निर्दिश्यते । एकाग्रं मनःकृत्वेति । उपरत चित्तेंद्रियव्यापारः आत्मनोमनसोविशुद्धये सर्वमनोमलदाहार्थे योगं युंज्यात् । सर्वात्मना चित्तवृत्तिनिरोधलक्षणं समाधियोगंकुर्यात् ॥ १२ ॥

( वरील श्लोकांत सांगितलेल्या ) त्या आसनावर बसून, मन आणि इंद्रियें यांचे व्यापार स्वाधीन करून घेऊन, मनापासून उत्पन्न होणारे कल्मषाचे निवारणार्थ, मन निश्चळ करून समाधियोग करावा; ह्मणजे सर्वत: क्षिप्त—मूढ—किंवा एकाग्र आणि निरुद्ध अशा भिन्न भिन्न चित्तवृत्ति आहेत त्यांपैकीं चौथी वृत्ति चित्तनिरोध तद्रूप समाधियोग करावा. उपासना, स्मरणरूप व ध्यानरूप अशा दोन प्रकारच्या आहेत. स्मरणरूप उपासना ही सर्वदा करितां येतें; आणि ध्यानरूप उपासना ही, मनोवृत्ति एकाग्र झाल्यावांचून करितां येत नाहीं. ह्मणून तें ( ध्यान ) आसनावर बसूनच करावें. तें ध्यान निद्रिताला किंवा उभें राहणाराला, त्यामुळें चित्तवृत्ति चंचल होत असल्यामुळें साध्य होत नाहीं. स्मरणोपासनेपेक्षां ध्यानोपासना श्रेष्ठ होय. ॥ १२ ॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥**

कायं मध्यदेहं शिरश्च ग्रीवांच समत्वेन धारयन् । अन्यथा मनश्चलनप्रसंगात् । उक्तंच । अचलं चेच्छरीरस्यात्मनसश्चाप्यचालनं । चलनेच शरीरस्य चंचलं च मनोभवेदिति । स्वयं स्थिरः अवहितप्रयत्नः । नासिकाग्रं संप्रेक्ष्येति । भ्रु मध्यं च संप्रेक्ष्येतिग्राह्यं । चक्षुश्चैवांतरेभ्रुवोरित्युक्तत्वात् ॥ १३ ॥

ह्मणून आसनविधि सांगतात—देहाचा मध्यभाग, शीर व कंठदेश सरळ राहील असा ठेवून, दृढ प्रयत्नयुक्त होत्सातां आपल्या नासिकाग्रावर ( नाकाच्या शेवटावर ) दृष्टि ठेवून इतर ठिकाणीं न पाहतां, शरीर चंचल झालें असतां मनही चंचल होतें ह्मणून शरीर न हालवितां मन एकाग्र करावें असें तात्पर्य. ॥ १३ ॥

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥**

प्रशान्तात्मा निर्मलचित्तः । अनेन श्रद्धादिसंस्कारवत्वमाचष्टे । विगतभीः । प्रमादालस्याद्यांतरयोगांतरायभयरहितः । ब्रह्मचर्येस्थितः ।

मनः सम्यक् प्रत्याहृत्य मच्चित्तो भगवद्ध्यानवान्युक्तः समाधिसंपन्नः आसीत् । सोपि समाधिर्भगवदनुग्रहादेव भवतीत्याशयेनाह । मत्पर-इति ॥ १४ ॥

निर्मलांतःकरण व निर्भय होऊन, स्त्रीसंगादि वर्ज करून–ब्रह्मचारीपणानें व्रतस्थ राहून–मन हें विषयांपासून फिरवून, तें माझ्या ठिकाणीं लावून, मीच या जडजीवात्मक प्रपंचापेक्षां श्रेष्ठ, सर्वोत्तम असा आहें व माझ्याच प्रसादानें हा समाधियोग सिद्ध होतो असें जाणून, समाधियोगयुक्त होऊन बसावें. ॥ १४ ॥

**युंजन्नेवं सदात्मानं योगी नियतमानसः ।**
**शांतिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥**

न केवलमादरनैरंतर्याभ्यां समाधिः सेवितव्यः किंतु दीर्घमपि तादृक्तयैव व्युत्थानसंस्कारानभिभाव्यत्वादितिदर्शयन् समाधिफलमाह । युंजन्निति । निर्वाणं देहाभावः । तस्मात्परमामुत्तरकालीनां मत्संस्थां मयिस्थितिं तादृशीं शांतिं योगी प्राप्नोति । न जीवन्मुक्तिमात्रमित्यर्थः ॥ १५ ॥

केवळ आदरपूर्वक व निरंतर समाधि केल्यानें ( समाधियोग ) झाला असें नाहीं. तर पुष्कळ काळपर्यंत समाधिस्थ राहिल्यानें विशेष फळ मिळतें ह्मणून सांगतातः–उपाययुक्त अशा योग्यानें मागें सांगितल्याप्रमाणें सर्वकाळ आपलें चित्त समाधियोगानें युक्त केलें तर, प्रारब्धभोग संपून देहत्याग केल्यावर, माझ्या अनुग्रहानें प्राप्त होणारी जी मुक्ति ती त्याला प्राप्त होते. ॥ १५ ॥

**नात्यश्नतस्तु योगोऽस्ति न चैकांतमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥**

योगनिष्ठस्याहारादिनियममाह । नात्यश्नतइतिद्वाभ्यां । एकांतमत्यंतम् । एतच्च जाग्रतइत्यनेनापि संबध्यते ॥ १६ ॥

योगनिष्ठांचे आहारादिकांचा क्रम सांगतातः–हे अर्जुना, अति भोजन करणाऱ्याला ( फार जेवणाऱ्याला ) समाधियोग साधत नाहीं. तसाच, उप-

वास करणारा, किंवा झोंप घेणारा, पुष्कळ भ्रमण करणारा, अशाळाही तो योग साधत नाहीं. हा विषय ( फार खाणें किंवा उपवास करणें वगैरे ) अशक्त अशांला मात्र लागू होय; सशक्त असतो तो उपवासादिक करूनही योग ( समाधियोग ) साधन करितो. ॥ १६ ॥

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥**

**यावता श्रमाद्यभावोभवति । तावदाहारादेर्दुःखनाशकोयोगो भवति । एतच्चाशक्तविषयं । उक्तंच । निद्राशन भयश्वास चेष्टा तंद्रादिवर्जनं । कृत्वानिमीलिताक्षस्तु शक्तो ध्यायन् प्रसिद्ध्यतीति ॥१७॥**

जितक्या आहारानें, जेवढ्या चालण्यानें, जितकें काम केल्यानें, तसेंच जितकी झोंप घेतल्यानें किंवा जागरण केल्यानें श्रम होत नाहींत, तेवढींच तीं ( आहारादिक ) केल्यानें दुःखनाशक असा योग सिद्ध होतो. हेंही अशक्तांविषयींच सांगितलें. कारण, झोंप, भीति, खाणें, श्वासोच्छ्वास, आळस, इत्यादि सर्वांचा त्याग करून, नासाग्रावर दृष्टि ठेवून, ब्रह्मध्यान करणारा सशक्त पुरुष समाधियोग साध्य करून घेतो. असा स्मृत्यर्थ ( शास्त्राचा अर्थ ) आहे. १७

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥**

**योगसंपूर्तिकालमाह । यदेति । आत्मनिभगवति ॥ १८ ॥**

समाधि साधली असें केव्हां ह्मणतां येईल, तें सांगतातः—ज्यावेळीं सर्व विषयांपासून फिरविलेलें चित्त, भगवद्ध्यानाचेठायींच आसक्त होतें, किंवा विषासारखे जे विषय त्यांपासून तें निरिच्छ होतें, तेव्हां त्या पुरुषाला समाधियोग साधला असें ह्मणतात. ॥ १८ ॥

**यथा दीपो निवातस्थो नेंगते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युंजतो योगमात्मनः ॥ १९ ॥**

**योगीकथंतिष्ठतीत्यपेक्षायां योगिनोऽवस्थितौ दृष्टांतमाह । यथेति । आत्मनः भगवद्विषयं योगं ॥ १९ ॥**

योगी कोणत्या प्रकारें राहतो याविषयीं दृष्टांत सांगतातः—मुळींच वारा नाहीं, अशा ठिकाणीं ठेविलेल्या दिव्याची ज्योत जसी हालत नाहीं, तसा परमात्मविषयक समाधिस्थ जो योगी असतो, त्याचें चित्त चंचल होत नाहीं; योग्याचे चित्तास ( वर सांगितलेल्या ) ज्योतीची उपमा लागू पडते. ॥ १९ ॥

## यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
## यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥

**विस्तरेण योगलक्षणमाह । यत्रेति । यत्र योगे निरुद्धं मनः उपरमतेऽन्यत्र निवृत्तव्यापारं भवति । विष्णौ रमतइतिवा । हृदिस्थविष्णौ संतोषः सदैवोपरमः स्मृतइतिवचनात् । यत्र चात्मना मनसा । यद्वा परमात्मना । तत्प्रसादादेवात्मनि देहे आत्मानं भगवंतं पश्यन् । तुष्यति सुखं प्राप्नोति ॥ २० ॥**

पुनः विस्तारानें योगाचें लक्षण सांगतातः—योगाभ्यासानें निश्चळ झालेलें मन ज्या समयीं विषयांपासून फिरतें त्या समयीं योग असें ह्मणतात; किंवा ज्या समयीं हृदयस्थ असलेल्या विष्णूचे ठायीं उपरम नामक संतोष होतो, अथवा परमात्म्याचे अनुग्रहरूप प्रसादानें देहाचे ठायीं जीव नियामकत्वानें असणाऱ्या परमात्म्याला पाहून जेव्हां संतोष प्राप्त होतो, तेव्हां त्याला योग असें ह्मणतात. ॥ २० ॥

## सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ।
## वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥

**बुद्धिग्राह्यं स्वानुभवेनवेद्यं अतींद्रियं इंद्रियैरग्राह्यम् । आत्यंतिकं सुखं वेत्ति यत्र स्थितस्तत्त्वतः । अबाधिताद्भगवद्रूपान्न चलति ॥२१॥**

आणखींही योगाचेंच लक्षण सांगतातः—जें सुख, स्वरूपज्ञान झालें असतांच समजतें, जें बाह्येंद्रियांस होत नाहीं, असें तें निरतिशय सुख, ज्या अवस्थेंत ( योगी ) जाणतो, किंवा ज्या अवस्थेंत ध्येय ( ध्यानयोग्य ) अशा परमात्म्याच्या स्वरूपापासून चंचल होत नाहीं, अशा अवस्थेला समाधियोगावस्था असें ह्मणतात. ॥ २१ ॥

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥२२॥**

यं लब्ध्वा ततोधिकमपरं लाभं न मन्यते । यस्मिन् स्थितो-गुरुणापि दुःखेन न विचाल्यते ॥ २२ ॥

ज्या अवस्थेंत प्राप्त परमात्मलाभापेक्षां दुसरा लाभ अधिक वाटत नाहीं, किंवा, ज्यासमयीं परमात्मज्ञानाचेठायींच स्थित होऊन, मोठें दुःख प्राप्त झालें असतांही चळत नाहीं, अशा अवस्थेला समाधियोगावस्था असें ह्मणतात. २२

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ।२३।**

तं योगसंज्ञितं विद्यात् । दुःखसंयोगो येन वियुज्यते स दुःखसं-योगवियोगः तम् । संयोगशब्देन न केवलमुत्पन्नं दुःखं नाशयति किंतूत्पत्तिमेव निवारयतीत्तिदर्शयति । योगानुष्ठाने गुणांतरविधानार्थ माह । सइति । निश्चयेन योक्तव्यएव बुभूषुणेत्यर्थः ॥ २३ ॥

त्या ( वर सांगितलेल्या ) अवस्थेला, दुःखसंयोगवियोगास साधन असा योग समजावा. ( त्या अवस्थेला योग असें नांव समजावें. ) तो योग लवकर सिद्धीस जाणार नाहीं असा खेद करणारानें, तो निश्चयानें करण्यास योग्य आहे. ॥ २३ ॥

**संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेंद्रियग्रामं विनियम्य समंततः ॥ २४ ॥**

सर्वान्सर्वविषयानशेषतः । एकविषयोपि कामः संकल्पः कदा-चित्कापि न कर्तव्यइत्यर्थः । मनसैव नियंतुं शक्यते नान्येनेत्येव-शब्दार्थः ॥ २४ ॥

( योगसाधन करणें होणार नाहीं. ) अशी ज्याची समजूत असेल त्या पुरुषानें, संकल्पास कारण होणारे जे विषय, त्यांचा त्याग करून, ह्मणजे उपभोगात्मक विषयांची कधींही कोठेंसुद्धां यत्किंचितही अपेक्षा करूं नये, ती

# अथ अष्टमोऽध्यायः

अर्जुन उवाच ।

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**

श्रीगुरुभ्यो नमः । सप्तमांतोक्तब्रह्माध्यात्मादीनां व्याख्यानपूर्वकं ब्रह्मत्वाधियज्ञत्वमृतिकालकर्तव्यस्मृतिविषयत्वगम्यत्वादिरूपो भगवन्महिमात्रउपवर्ण्यते । तत्र ब्रह्माध्यात्मादिरूपाजिज्ञासया अर्जुनउवाच । किंतद्ब्रह्मेत्यादिना । यद्यपि भगवतएव ब्रह्मत्वं प्रसिद्धं तथापि तेब्रह्मतद्विदुरित्यत्र तदिति विशेषणाद्भगवतोन्यद्ब्रह्मवेदादिकमितिप्रतीयते । साधिभूताधिदैवं मां साधियज्ञंचेति च शब्दस्य साधिभूताधिदैवं साधियज्ञं मां चेति संबंधेन ब्रह्मज्ञानादन्यदधिभूतादिविशिष्टविष्णुज्ञानमितिप्रतीते स्तस्याधिभूतमधिदैवमित्यादिना साधिभूतादिदैवस्य साधियज्ञस्य च विष्णोःब्रह्मत्वसिद्धिः । तदेव ब्रह्मपरमं कवीनामित्यादि वाक्याद्विष्णावेव ब्रह्मत्वमवसीयते । अतोविप्रतिपत्त्या संदेहात्प्रश्नः किंतद्ब्रह्मेति ॥ १ ॥

सातव्या अध्यायाचे शेवटीं सांगितलेलें अध्यात्मादि पदार्थ व्याख्यानपूर्वक, अधिभूतादिपदवाच्य व मृत्युकालीं स्मरण करण्यास योग्य असें ब्रह्मशब्दवाच्य तो श्रीकृष्णच होय; ह्मणून त्याचा महिमा या ( आठव्या ) अध्यायांत वर्णन करितात. प्रथमतः अध्यात्मादिकांचें स्वरूप जाणण्याची इच्छा करणारा अर्जुन प्रश्न करितोः—अर्जुन ह्मणतो हे क्षराक्षरोत्तम श्रीकृष्णभगवान् ब्रह्म तें कोणतें? अध्यात्म ह्मणजे काय? कर्म कशाला ह्मणतात? आणि अधिभूत व अधिदैव तें कसें असतें? ॥ १ ॥

**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥**

अधियज्ञः कथमिति प्रकारप्रश्नः कइति स्वरूपप्रश्नः अंतकालेच किमर्थं कथं भूतः केन प्रकारेण स्मर्तव्योसीत्यर्थः ॥ २ ॥

हे मधुसूदना, अधियज्ञ तो कसा असतो? या लोकीं, ज्याचें चित्त स्वाधीन आहे, अशा पुरुषानें मरणकाळीं कोणत्या प्रकारानें स्मरण करावें? व त्यापासून फळ काय मिळतें? ॥ २ ॥

श्रीभगवानुवाच ।

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥**

अत्रोत्तरं भगवानुवाच अक्षरमित्यादिना । वेदादिशंकाव्यावृत्त्यर्थमक्षरं परमत्वेन विशिनष्टि परमाक्षरत्वं विष्णोरेव प्रसिद्धमिति । तथैवोक्तं । अहं ब्रह्मेति येषामप्रसिद्धंतान् प्रत्यव्यक्तं व्यक्तिमापन्नमित्यव्यक्तत्वेन प्रसिद्धविष्णोरव्यक्तोक्षरइत्यक्षरत्वस्योक्त्या सिद्धमित्युपपादनीयं । आत्मानं जीवमधिकृत्य तदुपकारित्वेन वर्तमानं वस्त्वध्यात्मं । स्वस्य ते ब्रह्मतद्विदुरितिवेत्तृत्वेन प्रस्तुतस्य जीवस्य भावोंतःकरणादिदेहपर्यंतः पदार्थः स्वभावः । यद्वा । आत्माधिकारग्रंथे प्रतिपाद्यमध्यात्मं स्वयमेव भावः स्वभावोजीवः सर्वदास्त्येवैकप्रकारेणेतिभावः । असाधारणस्थितिरेकप्रकारा मनसएव नानास्थितिः विकारित्वात् अन्नमयंसोम्यमनइत्यादिश्रुतेः । स्वशब्द ईश्वरव्यावृत्त्यर्थः । तस्यजीवरूपत्वाभावात् प्रधानस्याप्रधानसंबंधित्वेन व्यपदेशाभावान्नस्वीयवाची स्वशब्दः । नचात्र धनवाचिता संभवति । भूतानां जीवानां भावानां जडपदार्थानां चोद्भवंकरोतीति तथा विशेषेण सर्जनं विसर्गः कर्मेतिसंज्ञितः ॥ ३ ॥

याप्रमाणें अर्जुनाचे प्रश्न ऐकून श्रीभगवान् त्यांचीं उत्तरें देतातः— श्रीभगवान् ह्मणतात; अक्षरशब्दवाच्य अशा वस्तूला “ ब्रह्म ” असें ह्मणतात; अंतःकरण आदिकरून देहापर्यंत पदार्थ जीवोपकारी असल्यानें त्याला अध्यात्म ह्मणतात; आणि जीवजडात्मक प्रपंच उत्पन्न करणारी जी ईश्वराची क्रिया तिला कर्म असें ह्मणतात. ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

भूतानि सशरीरान् जीवानधिकृत्य तदुपकारित्वेन यत्तदधिभूतं क्षरोभावोविनाशिकार्यपदार्थः । अव्यक्ते परमेव्योम्नि निष्क्रिये संप्रलीयते । तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमेत्यादेः प्रकृतेरपि वैषम्यापरित्यागेन साम्यापत्तिलक्षणोनाशोविक्रियानुरूपं जन्मचास्तीत्यधिभूतेंतर्भावः । पुरिशयनात्पुरुषोजीवः स च संकर्षणोब्रह्मा वा । सर्वजीवाभिमानित्वात् सर्वदेवानधिकृत्य पतित्वेन वर्ततइत्याधिदैवतं । देवा देवाधिकारग्रंथप्रतिपाद्याइति वा अधिगतोयज्ञं इत्यधियज्ञः अहं भगवान्साधियज्ञमिति भेदप्रतीतेस्तन्निवृत्त्यर्थमहमेवेत्युक्तं । तस्यैव सर्वप्राणिस्थितरूपांतरापेक्षया सहितत्वं युज्यते । अन्योधियज्ञोग्न्यादिः प्रसिद्धइति विशेषणं । अत्रेति स्वदेहव्यावृत्त्यर्थं नहि तत्रेश्वरस्य पृथक् नियंतृत्वमस्ति । सर्वप्राणिदेहस्थरूपेणाधियज्ञोभगवांश्चेत्यनेनैवास्य भोक्तृत्वादेराधियज्ञत्वं सिद्धमिति कथमित्यस्य परिहारः पृथक्नोक्तः । उक्तंच । देहस्थविष्णुरूपाणी त्वधियज्ञइतीरितः । कर्मेश्वरस्यसृष्ट्याख्यं तच्चापीच्छाद्यमुच्यते । आधिभूतं जडं चोक्तमध्यात्मं जीवउच्यते । हिरण्यगर्भोधिदैवं देवः संकर्षणोपिवा । ब्रह्मनारायणोदेवः सर्वदेवेश्वरेश्वरः । यथाप्रतीतंवासर्वमत्रनैवविरुध्यतइति ॥ ४ ॥

देहधारी जनांत श्रेष्ठ अशा अर्जुना, उत्पत्ति आणि नाश ज्यांला आहे असे पदार्थ जीवास उपयोगी आहेत; ह्मणून त्यांना अधिभूत ह्मणतात; शरीरांत असलेले जीवाभिमानी संकर्षण किंवा ब्रह्मदेव; यांनां अधिदैव ह्मणतात; या देहाचेठायीं जीवनियामकत्वानें असणाऱ्या—सर्व यज्ञ भोक्ता जो मी त्या—मला अधियज्ञ असें ह्मणतात; याप्रकारें सर्व देवांत श्रेष्ठ, अखिलगुणपरिपूर्ण जो नारायण तो मीच आहे ह्मणून मलाच ब्रह्म असें ह्मणतात; हें या ह्मणण्याचें तात्पर्य होय.

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥

प्रयाणकालेपिकिमर्थं स्मर्तव्योसि इत्यत्र परिहारमाह । अंतकालइति । अंतकाले मामेवस्मरन् देहंत्यक्त्वा यः प्रयाति समद्भावं मयि सत्तां निर्दुःखनिरतिशयानंदात्मिकां याति ॥ ५ ॥

प्रयाण ( अंत ) काळीं माझें स्मरण कां करावें तें सांगतात:—जो पुरुष अंतकाळीं माझें स्मरण करीत असतां देहत्याग करितो, तो निरतिशय आनंदयुक्त अशा व समानरूप देणाऱ्या मुक्तितें पावतो. येथें मद्भावशब्दानें जननमरणादिरहित सच्चिदानंदस्वरूप देह मत्प्रसादानें पावतो. असेंच तात्पर्य जाणावें. कारण कीटक—भृंग—न्यायानें कीटक हा, त्या भुंग्याच्या स्मरणानें त्या ( भुंग्या ) चें समानरूप पावतो. याशिवाय त्या भुंग्यांत ( कीटक ) मिळून जात नाहीं. याकरितां त्यांतही भेद असतो. यावरून मुक्त जीवगण परमात्म्याचे प्रसादानें जननमरणादि—दुःखरहित असा चांगला देह पावतात. ( त्यांस सद्देह प्राप्त होतो. ) असें या ह्मणण्याचें. तात्पर्य जाणावें. यावरून अद्वैतरूपी तमाचा तेथें प्रसार होत नाहीं. ॥ ५ ॥

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

तत्कथमित्यतआह । यंयमिति । स्मरंस्त्यजतीत्येककालत्वप्रतीतेर्नशंकावकाशः । दुःखाच्छरीरत्यागकाले स्मरणायोगाद्भिन्नकालीनत्वेप्यविरोधइतिशंका स्यात् । सामाभूदित्यंत इति विशेषणम् । अंतकाले स्मरणोपायमाह । सदेति । भावोंतर्गतंमनःस्याद्भावोंतर्गतं मनइत्यभिधानात् । भावितत्वमधिवासितत्वं । भावनात्वतिवासनेत्यभिधानात् । अपरोक्षज्ञानिनां प्रारब्धकर्मावसानद्वारा सदा तद्भावभावितत्वमंतकाले भगवत्स्मरणोपायइति द्रष्टव्यम् ॥ ६ ॥

त्याची प्राप्ति कशी होते तें सांगतात:—हे कुंतिपुत्रा अर्जुना, प्राणी मरणसमयीं, ज्या ज्या विषयांचें ध्यान करितो त्यास त्याच्या भावनेच्या योगानें त्या त्या विषयांची प्राप्ति होते. ह्मणून अंतसमयीं सर्वोत्तमादिगुणविशिष्ट मीं आहे, असें जाणून माझे चरणीं चित्त लावावें. असें करणें हें, सर्वसाधारण

मनुष्यांस होत नसून, ज्याचें प्रारब्धकर्म क्षीण झालें आहे, अशा अपरोक्ष-ज्ञान्याला मात्र, तो निरंतर ( माझें ) स्मरण करीत असल्यामुळें अंतसमयीं माझें स्मरण होतें. ॥ ६ ॥

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥**

**अतः प्रयोजनत्वात् सततं भगवदनुचिंतनं कर्तव्यमित्याह । तस्मादिति ॥ ७ ॥**

वर सांगितलेल्या कारणानें सतत भगवच्चिंतन करावें ह्मणून सांगतात:- याकरितां सदोदित-सर्वकाळीं-माझें स्मरण कर; अंतःकरण शुद्ध झाल्यावांचून हें ( स्मरण ) होत नसल्यामुळें, तें साध्य ( अंतःकरणशुद्धि ) होण्याकरितां, आपल्या वर्णाश्रमाला उचित असें जें युद्धकर्म तें तूं कर; माझे ठिकाणीं मन व बुद्धि अर्पण कर; तेणेंकरून तूं नित्यसुखात्मक असें माझें स्थान जी मुक्ति तींत मजजवळ येऊन सुख भोगशील. याविषयीं संशय नको. ॥ ७ ॥

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

**सदा तद्भावभावितत्वं स्पष्टयति । अभ्यासेति । अभ्यासएव-योगस्तेनयुक्तेनानन्यगामिना अनन्यविषयेण चेतसा अनुचिंतयन् परममुत्तमं पुरुषं पुरिशयं पूर्णंच स वा अयं पुरुषः सर्वासु पूर्षु पुरि-शयोनैनेन किंचनानावृत्तं नैनेन किंच नासंवृतमितिश्रुतेः । दिव्यं सृष्ट्यादिक्रीडायुक्तं याति ॥ ८ ॥**

आपली भक्ति निरंतर उत्पन्न होण्यास उपाय सांगतात:-हे पृथापुत्रा अर्जुना, अभ्यासरूप उपायानेंयुक्त, अन्य विषयांची इच्छा टाकून क्रीडादि-गुणविशिष्ट रमा किंवा ब्रह्माद्यशेषजीवजडादि प्रपंचाहून उत्तम, सर्व सद्गुणांनीं युक्त, सर्व प्राण्यांच्या हृदयांत वास करणारा, अशा परमात्म्याचें चिंतन करितो तो त्या परमात्म्याप्रत मुक्तींत पावतो. ॥ ८ ॥

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥

कथंभूतः केन प्रकारेण स्मर्तव्योसीत्यत्रपरिहारमाह । कविमितिश्लोकद्वयेन । कविं सर्वज्ञं त्वं कविः सर्ववेदनादितिवचनात् पुराणं पुरापि नवं पृषोदरादित्वात्साधुः । अनुशासितारंशिक्षकं । अणोरप्यणीयांसं सर्वस्य धातारं धारणपोषणकर्तारं अचिंत्यरूपं वाङ्मनसागोचरस्वरूपं आदित्यवर्णं सूर्यसदृशदेहप्रभं देहित्वेमृत्यादिप्रसंगइत्यतउक्तं तमसः परस्तादिति तमसः अव्यक्ता त्परस्तात्स्थितं । अव्यक्तं वै तमःपरस्ताद्धिसतत इतिश्रुतेः । अप्राकृतविग्रहमित्यर्थः । यद्वा मृत्युस्तमः मृत्युर्वैतमोज्योतिरमृतमितिश्रुतेः । मृत्युमदादिदेहरहित मित्यर्थः ॥ ९ ॥

परमात्मा तो कोणत्याप्रकारचा आहे व त्याचें स्मरण करणें तें कोणत्या गुणयुक्तत्वानें करावें? याविषयीं सांगतातः—त्या परमात्म्याला, सर्वज्ञत्व, अनादिसिद्धत्व, सर्वनियामकत्व हीं असून तो सूक्ष्मापेक्षांही सूक्ष्म, सर्व लोकांचें धारण व पोषण करणारा, साकल्यानें अचिंतनीय, सूर्यापेक्षांही ज्याचें तेज अधीक आहे असा, प्रकृतिजन्य देहरहित, ज्याला मृत्यु नाहीं, जो परिपूर्ण, अखिल ऐश्वर्यसंपन्न, असा आहे; जो पुरुष असें समजून, त्या परमात्म्याला ह्मणजे मला अंतकाळीं स्मरतो, तो नित्यसुखात्मक मुक्तीस जातो. ॥ ९ ॥

प्रयाणकाले मनसाचलेन
भक्त्या युक्तो योगबलेन चैव ॥
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

एवंभूतं भगवंतं निश्चलेन मनसा । तदुक्तम् । ब्रह्मरुद्ररमादि-

भ्योप्युत्तमत्वं स्वतंत्रतां । सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णतां । निर्दोषत्वं च विज्ञाय विष्णोस्तत्राखिलाधिकः । स्नेहोभक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तम इत्याद्युक्तलक्षणया भक्त्या योगबलेन च युक्तो यः भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् प्रयाणकाले नुस्मरेत् । स तं दिव्यं परमं पुरुषमुपैति ॥ १० ॥

जो मनुष्य मरणसमयीं माझ्या स्मरणापासून न चळतां, दोन्ही भिंवयांच्या मध्यभागीं प्राणवायूला, सुषुम्ना नामक नाडीमार्गानें योग्यरीतीनें ठेवून, पूर्वीं सांगितल्याप्रमाणें माझें स्मरण करितो, तो, सर्वोत्तम व अलौकिकगुणयुक्त अशी परमात्म्यानें अधिष्ठित जी मुक्ति त्या मुक्तीस जातो; अधिकारी ( ज्ञानी ) दोन प्रकारचे आहेत; त्यांपैकीं कित्येक भक्त्यादि साधनांनींयुक्त असतात व कित्येक वायूचें नियमन करणें ( योग ) इत्यादि प्रधान साधनांनींयुक्त असून, ते दोन्ही भिंवयाच्या मध्यभागीं प्राणवायूचें स्थापन करितात, ते वायुनियमनयुक्त ( वायूचें नियमन करणारे ) असे जाणावे. ॥ १० ॥

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥

मरणकाले कर्तव्यमेव ध्येयं प्रपंचयति । यदक्षरमित्यादिना । अक्षरं सर्वथानाशरहितं वीतरागाः अपगतकामादयोमुक्ताः ब्रह्मचर्यं मनआदीनां ब्रह्मणि चरणं । पद्यते गम्यते मुमुक्षुभिरितिपदं गीयसेपदमित्येवमुनिभिःपद्यसेयत इतिवचनात् । तत्ते पदं संग्रहेण प्रवक्ष्ये तत्स्मरणप्रकारं प्रवक्ष्ये ॥ ११ ॥

मरणसमयीं ज्या रूपाचें ध्यान करावयाचें त्या रूपाचें विस्तारानें वर्णन करितात—जी वस्तु नाशरहित आहे असें यथार्थज्ञानी सांगतात, किंवा रागद्वेषादिरहित, प्रयत्नशील असे योगी सायुज्य विमुक्तींत जेथें जातात, ज्या वस्तूच्या इच्छेनें अधिकारी आपलें मन आदिकरून इंद्रियें, परब्रह्माचे ठायीं लावून ब्रह्मचर्यरूप इंद्रियनिग्रह करितात, असे मोक्षाची इच्छा करणारे जे

मुनिजन त्यांसच प्राप्त होणारें जें ब्रह्म, त्याचें तुला ध्यान करितां यावें ह्मणून, मी संक्षेपानें त्याचें ( ब्रह्माचें ) वर्णन करून तुला सांगतों ॥ ११ ॥

**सर्वद्वाराणि संयम्य मनो हृदि निरुद्ध्य च ॥**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥**

ब्रह्मनाडींविना यद्यन्यत्र गच्छति तर्हि विना मोक्षं स्थानांतरं प्राप्नोतीत्यतः सर्वद्वाराणि संयम्य निर्गच्छंश्चक्षुषा सूर्यं दिशःश्रोत्रेण चैवहीत्यादिवचनात् । हृदि नारायणे ऱ्हीयतेच जगद्यस्मात् हृदि-त्येवं प्रभाष्यस इतिवचनात् हरतीति । हृदितिव्युत्पत्तिः जस्त्वं छांदसं अहृदीति वा अप्राणोह्यमनाइतिश्रुतेः । मनोनिरुद्ध्य नहि मूर्ध्नि प्राणे-स्थिते हृदये मनसः स्थितिः संभवति । यत्र प्राणोमनस्तत्र तत्र जीवः परस्तथेति वचनात् । आत्मनः प्राणं वायुं सुषुम्नया मूर्ध्नि ब्रह्मरंध्रे आधाय योगधारणमास्थितः योगधारणएवाभियुक्तः ॥ १२ ॥

ब्रह्मनाडीशिवाय इतर सर्व नाड्यांचा निरोध करून, हृत् शब्दवाच्य जगाचा संहार करणारा जो नारायण त्याच्या ठायीं चित्त लावून, प्राणवायुला सुषुम्नानाडीच्या द्वारानें शिरप्रदेशीं नेऊन, परमात्म्याचें ध्यानरूप योग करीत असतां, एकनिष्ठ ब्रह्मज्ञानी प्राणोत्क्रमण करील तर, तो माझ्या प्रसादानें मुक्तीस जातो. ॥ १२ ॥

**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥१३॥**

ॐ मित्येकाक्षरवाचकं यत् तद्ब्रह्म व्याहरन्नुच्चरन् मामेव ब्रह्मानुस्मरन् यो देहं त्यजन् प्रयाति स परमां गतिं याति ॥ १३ ॥

ॐकार शब्दवाच्य अशा ब्रह्माचें स्मरण करून, जो मनुष्य ॐकाराचा मुखानें उच्चार करीत असतां देहत्याग करितो, तो अर्चिरादि मार्गानें उत्तम गतीस जातो. ॥ १३ ॥

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥**

कासौ परमगतिरित्यतआह । अनन्येति । नित्ययुक्तस्य नित्योपायवतोयोगिनः परिपूर्णयोगस्य एतच्च वायुजयादि योगयुक्तविषयं वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसंपूर्णानां भवत्येव मुक्तिः । तद्रतां त्वीषत् ज्ञानादिसंपूर्णानामपि निपुणानां तद्बलात्कथंचिद्भवतीति विशेषः । उक्तंच । संपूर्णानां भवेन्मोक्षो विरक्तिज्ञानभक्तिभिः । नियमेन तथापीहयादियुतयोगिनां । वश्यत्वान्मनसस्त्वीषत्पूर्वमप्याप्यतेध्रुवमिति ॥ १४ ॥

ती उत्तम गति कोणती तें सांगतातः—हे पृथापुत्रा अर्जुना, सर्व विषयांवरून आपलें चित्त फिरवून, केवळ माझ्या ध्यानांतच निरत अशा चित्तानें युक्त, जो मनुष्य माझें स्मरण करितो, त्या नित्य स्मरण करणाऱ्या पूर्ण योग्याला, माझी प्राप्ति अगदीं सुलभ रीतीनें होते. ॥ १४ ॥

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥**

भगवत्प्राप्तिंस्तौति । मामिति । भगवंतं प्राप्तानां पुनर्जन्मानवाप्तौ हेतुः संसिद्धिमित्यादि ॥ १५ ॥

भगवत्प्राप्ति झाली असतां जें फळ मिळतें त्याची स्तुति करितातः—मत्स्थानभूत नित्य मुक्तीप्रत गेलेले असे जे ज्ञानी ते पुनरपि, दुःखाचें केवळ घरच व अनित्य अशा जन्ममरणरूप संसारांत येत नाहींत; इतकेंच नव्हे, तर त्या ज्ञान्यांनां या अनित्य लोकांची इच्छाही होत नाहीं. किंवा त्यांनीं पुनः संसारांत पडावें ( त्यांना अधोगती प्राप्त व्हावी ) असें कांहीं कारणच त्यांच्या आंगीं नसतें. ॥ १५ ॥

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

ब्रह्मादीन् प्राप्तानामपि पुनर्जन्माभावात्किंविशेष्याभिधीयते मामुपेत्य पुनर्जन्म नाप्नुवंतीत्यतआह । आब्रह्मभुवनादिति । ब्रह्मभुवनं मेरुस्थमत्राविवक्षितं । जनोलोकोप्यनेन गृह्यते । आब्रह्मभुवनादेव-

माजनाच्चार्वाग्भवा एव लोकाः पुनरावर्तिनःपरे न पुनरावर्तिनः। तथापि नोक्तमयुक्तं । यतस्तेषु लोकेषु स्थितं मामुपेत्यावस्थितस्य पुनर्जन्म न विद्यतइत्यर्थः। उक्तंच। आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि। तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजमिति। मेरुस्थ ब्रह्मसदनमारभ्य जनलोकं चारभ्य परतः स्थितानां ब्रह्मज्ञानिनां न पुनरावृत्तिः। तथापि तेषु लोकेषु स्थितं भगवंतमुपेत्यावस्थितानामेव पुनरावृत्तिः। अथवा ब्रह्मभुवनमारभ्य लोकाः पुनरावर्तिनः अल्प जन्मादिमंतः मामुपेत्यावस्थितस्य मुक्तस्यांशतोपि पुनर्जन्म न विद्यत इति। उक्तंच। नियमाज्जन्मनोभावोमुक्तस्यैव तथापि तु। महर्लोकमतीतानां न जन्मांश लयौविना। तत्राप्यवश्यं तत्स्थानं तैः क्षिप्तं पुनराप्यतइति ॥ १६ ॥

जर ब्रह्मादि देवगणांस शरण गेल्यानें, एखाद्यास अशा प्रकारची मुक्ति प्राप्त होत असेल तर, ह्या तत्वज्ञानानें प्राप्त होणाऱ्या मुक्तींतच विशेष काय आहे? या शंकेचें समाधान करितातः—मेरुपर्वतावर असणाऱ्या सत्य नामक ब्रह्मलोकापासून त्याखालील सर्व लोक हे अनित्यच आहेत. या लोकांत गेलेला प्राणी पुनरपि जन्ममरणरूप दुःखांत ( संसारांत ) पडतो. परंतु मला जो शरण येतो तो माझ्या प्रसादानें नित्यसुखात्मक मुक्तीस जाऊन पुनरपि जन्मादि दुःखांत पडत नाहीं. जरी, जनोलोकापासून सत्यलोकापर्यंतच्या लोकांत रहाणाऱ्यास पुनः जन्म नाहीं; असें क्वचित् ठिकाणीं सांगितलें आहे. तरी त्या ब्रह्मलोकादि तीन लोकांत असणाऱ्यास अंशतः तरी जन्मादिक प्राप्त होतात; पण विष्णुलोकास गेलेल्या ज्ञान्यांस काळयत्रीं अंशतःसुद्धां ते ( जन्मादिक ) प्राप्त होत नाहींत; असें तात्पर्य. ॥ १६ ॥

**सहस्रयुगपर्यंतमहर्यद्ब्रह्मणो विदुः ॥**
**रात्रिं युगसहस्रां तांतेऽहोरात्रविदो जनाः ॥ १७ ॥**

मत्प्राप्तावेवापुनरावृत्तिरित्युक्तस्थापनायाशेषसृष्टिप्रलयादि कर्तृत्वमात्मनोदर्शयति । सहस्रेत्यादिना । सहस्रशब्दोत्र बहुत्ववाची ब्रह्मणः परब्रह्मणः । अनेकयुगपर्यंत महर्विष्णोस्तथानिशा। रात्र्यादौ-

लीयते सर्वमहरादौच जायतइतिवचनात् । निर्विकारस्य विष्णोरात्राविव प्रलयकाले प्रवृत्त्यभावादन्यदा प्रवृत्तिसद्भावात्प्रलयादिकालोरात्र्यादित्वेनोपचर्यते । तदुक्तं । नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयं । अहश्चासौनिमेषश्चेत्यप्रवृत्त्योपचर्यतइति ॥ १७ ॥

माझ्या प्रसादानें साध्य होणारी जी नित्यमुक्ति ती प्राप्त झालेल्या लोकांस पुनरावृत्ति ( जन्ममरणादि ) नाहीं. हें ह्मणणें दृढ करण्याकरितां मी सर्व जगाचा उत्पत्ति व संहारकर्ता आहें असें सांगतात:-पुष्कळ हजार महायुगांपर्यंत परमात्म्याचा दिवस होय; त्या प्रमाणेंच पुष्कळ हजार महायुगांपर्यंत त्याची रात्र होय, असें जे योगबलानें जणतात, तेच परमात्म्याचे दिवस रात्रीचे विभाग जाणतात असें समजावें. परमात्म्यास अहोरात्र हा कालनियम नाहीं. तथापि ब्रह्मदेवाच्या द्विपरार्धकाळीं परमात्मा सृष्टि करण्यास प्रवृत्त होतो ह्मणून त्या कालाला द्विपरार्ध असें ह्मणतात व दुसऱ्या द्विपरार्धकाळीं परमात्मा सृष्ट्यादिकांची प्रवृत्ति करीत नाहीं; त्याच काळाला रात्री असें ह्मणतात; या शिवाय चतुर्मुख असा जो ब्रह्मा त्याच्या दिवसांत सृष्टी व त्याच्या रात्रींत विनाश होतो असा अर्थ नाहीं. परमात्म्याचे अहोरात्र विभाग हे सृष्टि किंवा संहार यांस अनुसरून उपचार मात्र आहेत. या वांचून त्या परमात्म्याचे अमुक दिवस किंवा अमुक वर्षें झालीं असें कोण सांगूं शकेल? परमात्म्याकडून पूर्वोक्त ( पूर्वी सांगितलेल्या ) काळीं जगाची उत्पत्ति व त्याचा विनाश इत्यादि होतात. इतर देवादिकांकडून होत नाहींत असें या ह्मणण्याचें तात्पर्य आहे. ॥ १७ ॥

**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ॥**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**

अव्यक्ताद्विष्णोर्व्यक्तयोगुणवैषम्यादयः । तत्रैव विष्णावेव ।१८।

परमात्म्याच्या उपचरित दिवसाचे आरंभीं, त्या अव्यक्त नामक परमात्म्यापासूनच चराचरात्मक प्राणिसमुदायरूप जगत् उत्पन्न होतें आणि त्याच्या उपचरित रात्रीस आरंभ झाला ह्मणजे, त्या अव्यक्त नामक परमात्म्याच्याच सत्तेनें सर्व चराचरात्मक जगत् नाश पावतें. ॥ १८ ॥

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ॥**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

भूतग्रामोभूतसमूहः । अवशोविष्णुवशः ॥ १९ ॥

हे पार्था, अर्जुना, परमात्म्याचे स्वाधीन असे चराचरात्मक जीवसमुदाय त्या परब्रह्माच्या दिवसाच्या आरंभकाळीं उत्पन्न होऊन, पुनः त्याच्या रात्रीस आरंभ झाला ह्मणजे ते त्याच्याच स्वाधीन असूनच लयास जातात; स्थूल देहाची प्राप्ति किंवा त्याचा वियोग होणें यांसच जीवाची उत्पत्ति व नाश असें ह्मणतात. ॥ १९ ॥

**परस्तस्मात्तु भावोऽन्योऽव्यक्तो व्यक्तात्सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥**

परउत्तमः भावः स्वतंत्रः पदार्थः । सृष्टिस्थितिश्वसंहारो भावनं समुदाहृतं । तद्यः करोति पुरुषः सभावइतिकीर्तितः इतिवचनात् । अव्यक्तात्तस्माद्व्यक्तादन्यः यः सर्वेष्वित्यव्यक्तत्वोपपादनं ॥ २० ॥

चराचरात्मक समुदायापासून कालत्रयीं भिन्न, सर्वोत्तम अनादि निधन, सृष्ट्यादिकर्ता असा परमात्मा, सर्वजीवसमुदाय देहप्राप्ति व देह वियोगरूप विनाश पावले तरी, तो ( परमात्मा ) स्वतंत्र, नित्य, अखिल, सच्छक्ति, चिन्मयमूर्ति असा श्रीहरि असल्यामुळें त्यास कधींही उत्पत्ति व नाश हीं होत नाहींत. ( त्याला उत्पत्ति व नाश हीं नाहींत. ) ॥ २० ॥

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥**

धाम स्वरूपं । तेजस्वरूपंच गृहं प्राज्ञैर्धामेतिगीयतइतिअभिधानात् ॥ २१ ॥

जो अव्यक्त व अक्षरशब्दवाच्य परामात्मा तोच योगीजनांस ध्येय ( ध्यानयोग्य ) व परमगती ( मुक्ती ) स साधन आहे. ज्या लोकास एकदां गेलेले ज्ञानी पुनरपि या जननमरणरूप संसारावृत्तींत पडत नाहींत, असा जो तेजःपुंज लोक तो माझा ( लोक ) होय. ॥ २१ ॥

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥**

भक्त्यायुक्तइत्यादिना । भक्तेः साधनांतरैः सह साधनत्वमुक्तम् । तत्र साधनांतरसाम्यशंकानिरासाय भक्तिरेव परमं साधनमित्याह । पुरुषइति । यस्य स इतिसंबंधः ॥ २२ ॥

मुक्तीची प्राप्ति होण्याला कारण अशीं दुसरीं कर्मादिक साधनें असलीं तरी तीं गौण असून, भक्ती हेंच ( मुक्तीला ) मुख्य कारण आहे असें सांगतातः-हे पार्था, प्रलयकाळीं सर्व प्राणिसमुदाय ज्याच्या उदरांत असतात किंवा ज्याच्या सत्तेनें हें सर्व जग व्यापिलें आहे, असा जो सर्वोत्तम परमपुरुष योगीजनांनीं आचरिलेल्या अशा अत्युत्तम व अनन्य भक्तीनें लभ्य आहे. येथें अनन्यशब्दानें ज्या तऱ्हेची, सर्वज्ञत्वादि अखिल गुणसंपन्न, सर्वोत्तमादि महात्म्य ज्ञानजनित परमात्म्याचेठायीं, भक्ति असते ती भक्ति रमा, किंवा ब्रह्मरुद्रादि जीवगणांचेठायीं नसणें, तिलाच अनन्य-भक्ति असें ह्मणतात. याशिवाय भक्ति ह्मणजे, जीव व ईश्वर यांस अभेद मानणें ही मोठी अनर्थ करणारी असल्यामुळें तिला भक्ति असें कधींहि समजूं नये. ॥ २२ ॥

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

भगवंतं प्राप्तानां अपुनरावृत्तिरित्युक्तं तत्रापुनरावृत्तिमतामन्येषांच केन पथागमनमित्यपेक्षायामाह । यत्रेत्यादिना । यत्र कालाद्यभिमानि देवतासु मृत्यनंतरं प्रयाता आवृत्तिमनावृत्तिच यांति तं कालं कालाद्यभिमानिदेवतां वक्ष्यामि ॥ २३ ॥

भगवंताच्या प्रसादानें ज्ञानिजनास पुनरावृत्तिरहित लोक प्राप्त होतो असें सांगितलें तर ते योगी कोणत्या मार्गानें त्या मुक्तीस जातात, तो मार्ग व दुसऱ्या लोकांस जाण्याचे मार्ग सांगतातः—हे भरतकुलोत्पन्ना अर्जुना, योगीजन मरणानंतर ज्या कालाद्यभिमानी देवतांनीं आश्रित अशा मार्गानें ( मुक्तीस ) जातात ते पुनरावृत्तींत–जन्ममरणरूप संसारांत पडत नाहींत; आणि कालाद्य-

भिमानी देवतांच्या आश्रयानें रहित ( त्यांचा आश्रय नाहीं असे ) अशा मार्गानें जाणारे कर्मशील जीव पुनरावृत्तींत–जन्ममरण ज्यांत आहे असा जो संसार त्यांत–पडतात; असा जो काळ तो व देवता हीं पुढील श्लोकांत सांगतात. ॥ २३ ॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥**

अग्निर्ज्योतिर्धूमानामकालाभिमानित्वेपि कालप्राचुर्यात्तत्साहचर्येण कालत्वमुपचर्यते । ज्योतिरर्चिः अहरभिजित्सहितम् । शुक्लः पूर्णमास्यायुक्तः । अयनं विषुवेण सह स्थितं । मासाभिमानिभ्योप्ययनाभिमानी पृथक् । तत्र प्रयाता ब्रह्मविदो ब्रह्म गच्छंति । उक्तंच । अग्निर्ज्योतिरितिद्वेधा वन्हेः पुत्रोप्यवस्थितः । तं प्राप्य यांति ब्रह्मिष्ठादिवसाद्यभिमानिन इति । तथा–साह्नामध्यंदिनेनाथ शुक्लेनच स पूर्णिमा । स विषुवायनेनासौ पूजितः केशवं व्रजेत् । पूजितस्त्वयनेनासौ मासैः परिवृतेनहीतिच ॥ २४ ॥

अग्नीचे प्रधानपुत्र दोन; अग्नि आणि ज्योति; हे दोघेही एकाच लोकात असतात. ब्रह्मवेत्त्यास ज्यास पुनरावृत्ति नाहीं अशा मार्गानें जावयाचें ह्मणजे त्याच्या ( अग्नीच्या ) लोकास प्रथम जावें लागतें. त्यानंतर मध्यान्हाभिमानी अभिजिन्नामक देवतेनें युक्त अशा अहरभिमानी देवतेप्रत जाऊन, नंतर पौर्णिमाभिमानी देवतेनें युक्त शुक्लपक्षाभिमानी देवतेप्रत जाऊन, मग षण्मासाभिमानी देवतेप्रत ( तो ब्रह्मवेत्ता ) पोंचतो, तदनंतर विषुवनामक देवतेनें युक्त उत्तरायणाभिमानी देवतेप्रत जातो. अशा रीतीनें अग्न्यादि देवतांनीं आश्रित अशा मार्गानें ब्रह्मज्ञानी मुक्तीस जातात. क्रमाक्रमानें येतांना त्या त्या लोकांतील देवतांनीं केलेल्या सन्मानाचा स्वीकार करून, उत्तरोत्तर देवताधिष्ठित लोकांत ( तो ) जातो, असें याचें तात्पर्य होय. ॥ २४ ॥

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ॥**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥**

योगी कर्मयोगी धूमादिदेवतामार्गे गत्वा चंद्रं प्राप्य निवर्तते। स्मरणनिमित्तचैतेगती इति दर्शयितुं ब्रह्मविदोयोगीति विशेषणं। उक्तंच। गत्यनुस्मरणाद्ब्रह्म चंद्रं वा गच्छति ध्रुवं। अननुस्मरणात्काले स्मरणं प्राप्य वै गतिरिति। तत्कालमरणविवक्षायामग्निर्ज्योतिर्धूमानामयोगः। अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चंद्रमसः सायुज्यं सलोकतामाप्नोति। एतोवै सूर्याचंद्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति। तस्माद्ब्रह्मणो महिमानमाप्नोतीति विदुषो दक्षिणायनमरणेप्यपुनरावृत्त्या ब्रह्मप्राप्तिश्रुत्या सा न विरुध्यते। उक्तंच। शतं पंचैव सूर्यस्य दक्षिणायनरश्मयः। तावंतएव निर्दिष्टा उत्तरायणरश्मयः। ते सर्वे देहसंबद्धाः सर्वदा सर्वदेहिनां। महर्लोकादिगंतारः उत्तरायणरश्मिभिः। निर्गच्छंतीतरैश्चैव यैरेष्टव्येतरागतिः। उत्तरं दक्षिणमिति ते एवतु निगद्यते। नतु कालविशेषोस्ति ज्ञानिनां नियमात्फलं। ददाति कालेऽनुगुणं फलं किंचिद्विशिष्यते। अत्युत्तमानां केषांचिन्नविशेषोस्ति कालतइति॥ २५॥

पुनरावृत्तिवंत ( ज्यांस पुनरपि जन्ममरणादिकांचे फेऱ्यांत पडावें लागतें अशा ) कर्मयोग्यांना पाहिल्यानें धूमाभिमानी देवतेप्रत जाऊन; नंतर कृष्णपक्षाभिमानी देवतेप्रत जावें लागून, मग षण्मासाभिमानी देवतेप्रत जावें लागतें; पुढें दक्षिणायनाभिमानी देवतेप्रत गेलें पाहिजे. याप्रमाणें क्रमाक्रमानें धूमादि देवताश्रित मार्गानें जाऊन शेवटीं ते चंद्रलोकीं पोंचतात. तथापि ज्ञानी लोक दक्षिणायनांत मरण पावले तरी, ते मुक्तीस जातात. कारण दक्षिणायन सूर्याच्या रश्मी पांचशें आणि उत्तरायण सूर्याच्या रश्मी पांचशें आहेत; या सर्व रश्मींचा संबंध सदोदित सगळे देहधारी यांस असतोच; ह्मणून उत्तरायण रश्मींच्या योगानें ज्ञानीलोक सर्वकाळीं ब्रह्मलोक मार्गानें जातात. दक्षिणायन रश्मींच्या योगानें कर्मयोगी अनित्य अशा चंद्रादि लोकांत जातात. उत्तरायण व दक्षिणायन ह्मणून येथें तेच ( वर सांगितलेले ) रश्मी सांगितले आहेत. ज्ञान्यांस कालविशेषाची जरूर नाहीं. तथापि, उत्तरायणादि काल अनुकूल झाला तर, थोडें विशेष फळ मिळतें. कित्येक जे अत्युत्तम ज्ञानी आहेत, त्यांस कालविशेषाची मुळींच जरूर नाहीं असें याचें तात्पर्य॥ २५॥

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ॥**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ २६ ॥**

**उक्तौ मार्गौ निगमयति । शुक्लकृष्णेति । ज्ञानकर्मसंबंधिन्यौ शाश्वते शाश्वत्यौ अनादिसंसिद्धे एते गती एकयाऽनावृत्तिं याति अन्यया पुनरावर्तते ॥ २६ ॥**

ज्ञान व कर्मसंबंधी अर्चिरादि व धूमादि हे मार्ग ज्ञान्यांस व कर्मठांस ( कर्मयोग्यांस प्राप्त होतात हे ) अनादि संमत आहे. संसार हा अनादि आहे ह्मणून ते मार्गही अनादीच होत. यापैकीं शुक्ल अर्चिरादि मार्गांनीं ज्ञानीलोक जिला पुनरावृत्ति नाहीं अशा मुक्तीस जातात; आणि कृष्णधूमादि मार्गानें ( कर्मठ ) चंद्रलोकांत जाऊन, पुनः पुनः जन्ममरणरूप संसाराच्या फेऱ्यांत ते ( कर्मयोगी ) पडतात. ॥ २६ ॥

**नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ॥**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥**

**मार्गकथनस्य प्रयोजनमाह । नैतेइति । योगी ब्रह्मसाक्षात्कारोपायवान् । एतेगती मार्गौ जानन् । साक्षात्कुर्वन्न मुह्यति । तस्मात्सदाभक्तियुक्तोभव ॥ २७ ॥**

वर सांगितलेले हे दोनमार्ग सांगण्याचें कारण सांगतातः—हे अर्जुना, हे सांगितलेले दोन्ही मार्गही जाणून भवबंधनाशक अपरोक्ष ज्ञान, तें ज्यांस झालें आहे असे योगी, मिथ्या ज्ञानानें कधींही मोहित होत नाहींत. याकरितां हे अर्जुना, तूंही फळाची इच्छा न करितां भगवत्प्रसादाला कारण असा योग सर्वदा कर. ॥ २७ ॥

**वेदेषु यज्ञेषु तपस्सु चैव**
**दानेषु यत्पुण्यफलं प्रदिष्टम् ॥**
**अत्येति तत्सर्वमिदं विदित्वा**
**योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥**

## इति श्रीमद्भगवद्गीताविवृत्तौ अक्षरब्रह्मयोगोनाम अष्टमोऽध्यायः ॥ ८ ॥

किंच वेदाध्ययनादियत्पुण्यं उपदिष्टं तत्सर्वमपीदं मार्गादिकं विदित्वातिक्रामति । आद्यं परं विष्णोस्थानं उपैति । उक्तंच । मार्गौ ब्रह्म च यः पश्येत्साक्षादेवापरोक्षतः । सर्वपुण्यातिगोमुह्यन्यात्य-सौब्रह्मतत्परमिति ॥ २८ ॥

इति श्रीमद्भगवद्गीताविवृतौ विद्याधिराजभट्टोपाध्यायविरचितायाम्
श्रीमध्वमतानुवर्तिनी व्याख्योपेतायाम्
अष्टमोऽध्यायः ॥ ८ ॥

संसारसागर तारक ब्रह्मसाक्षात्कारानें युक्त व भगवद्भक्त योगी, हे दोन्ही मार्ग समजून, वेदाध्ययनानें, यज्ञादि अनुष्ठानानें अथवा तपश्चर्येनें प्राप्त होणाऱ्या पुण्याचें फळ जें अनित्य असे स्वर्गादि लोक त्यांच्या प्राप्तीनें होणाऱ्या सुखापेक्षा, परमश्रेष्ठ अनादि, नित्य, सतत सुख देणारा अशा त्या श्रीहरिपरमात्म्याच्या वैकुंठलोकास जातो. याकरितां मला संतोष देणारें असें स्वधर्माचें आचरण जें युद्ध तें करून, तूं मुक्तीसुखाचा अनुभव घेण्यास तयार हो. ॥ २८ ॥

येथें श्रीमदिन्दिराकान्ततीर्थ श्रीपादविरचित प्राकृत टीकेचा
आठवा अध्याय समाप्त झाला.

## अथ नवमोऽध्यायः

श्री भगवानुवाच ।

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥**
**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

श्रीगुरुभ्यो नमः । सप्तमाध्यायोक्तमेव भगवन्महिमानं अष्टमे प्रसंगादागतं प्रश्नपरिहारं समाप्य नवमे प्रपंचयति । अतिविचित्रं भगवन्महिमानं वक्तुं प्रतिज्ञाय प्रशंसति । इदंत्वित्यादिना । अतिशयेनगोप्यं अनसूयवे दोषदृष्टिरहिताय अशुभात् संसारात् ॥ १ ॥ राजविद्या प्रधानविद्या राजगुह्यं प्रधानगोप्यं अक्षेष्विंद्रियेषु प्रति प्रति स्थितइति प्रत्यक्षोभगवान् । स प्रत्यक्षः प्रतिहि सोऽक्षेष्वितिश्रुतेः सोवगम्यते येन तत्प्रत्यक्षावगमं अनेनापरोक्षज्ञानसाधनत्वमुक्तं सर्वजगतोधारकइति धर्मोभगवान् । पृथिवी धर्ममूर्धनीति प्रयोगात्तद्विषयं धर्म्यं । परोक्षज्ञानसाधनं सुसुखं सुखेन कर्तुंशक्यं ॥ २ ॥

अति विचित्र असा भगवंताचा महिमा या ( नवव्या ) अध्यायांत वर्णन करितों ह्मणून सांगतातः-हे अर्जुना, ज्या ज्ञानामुळें ( ज्ञानी ) अशुभ असा जो संसार, त्यापासून मुक्त होतो, असें जें ज्ञान तें विशेष ज्ञानासह तुळा सांगतों; पुनः पुनः उपदेश केळा तरी असूयादि दोषरहित असा तूं असल्यामुळें तें ज्ञान ऐकण्यास तूं योग्य आहेस. सर्व ज्ञानांत श्रेष्ठ, गोप्यांत अति गोप्य, पवित्रांत अति पवित्र, असें हें ज्ञान सर्वेंद्रियांचा प्रेरक जो परमात्मा, त्याचें अपरोक्षज्ञान होण्याळा साधन असून, तें सर्व जगाचें धारण करणारा जो श्रीहरी, त्याचें स्वरूप दाखवितें; आणि तें ( ज्ञान ) सुखानें संपादन करण्यास योग्य असून, त्याचा कधींही नाश होत नाहीं. ॥ १ ॥ २ ॥

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥**

सुकरत्वे न कोपि संसारयोग्यइत्यत्राह । अश्रद्दधानाइति । श्रद्धास्तिक्यं श्रन्नामास्तिक्यमुच्यतइत्यभिधानात् । श्रद्धधानानेत्यश्रद्धानाः अस्य धर्मस्य इमं धर्ममास्तिक्येना स्वीकुर्वंतोमृत्युरूपसंसारमार्गे नितरांवर्तंते ॥ ३ ॥

जर ज्ञान हें सुखानेंच प्राप्त होईल तर संसारांत कोणीच पडणार नाहीं, या शंकेचें समाधान करितातः—हे शत्रूंला ताप देणाऱ्या अर्जुना, माझें नित्य स्थान जें वैकुंठ, त्या स्थानास जाण्याला साधन असा जो हा ज्ञानरूपी मार्ग, त्या मार्गाचें आस्तिक्यबुद्धीनें आचरण करीत नसतात म्हणून माझ्याजवळ—वैकुंठांत—येत नाहींत. इतकेंच नव्हें तर उलट ते या मृत्युरूप संसारांत फिरत रहातात. ॥ ३ ॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥**

प्रतिज्ञातं ज्ञानमाह । मयाततमिति । सर्वव्यापीचेत्किमिति तथा न दृश्यतइत्यतआह । अव्यक्त मूर्तिनेति ॥ ४ ॥

प्रतिज्ञा ज्ञानाचें विवरण करितातः—ईश्वर सर्व जगांत व्याप्त असल्यास तो ईश्वर लोकांस कां दिसत नाहीं, असें म्हणूं नये; कारण, मी अती सूक्ष्म असल्यानें लोकांनां दिसत नाहीं. सर्व प्राणिगण माझ्या आधारानें असतात, मी त्या प्राण्यांच्या आश्रयानें रहात नाहीं. ॥ ४ ॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

मत्स्थान्यपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह । नचेति तत्र हेतुः ऐश्वरं ईश्वरस्वभावं योगं सामर्थ्यं पश्येति । अचिंत्यशक्तित्वादसंगत्वादितिभावः । युज्यतेनेन योगोऽसौउपायः शक्तिरेवचेत्यभिधानं । अव्यक्तमूर्तिनेति । भगवतो मूर्तिरुक्ता सा अस्मदादीनामिव भिन्नेति भ्रांतिनिरासाय स्वदेहस्यापि लक्षणमाह । भूतभृदिति । ममात्मा देहएव भूतभावनः । तदनन्यत्वादेहस्याचेतनत्वशंकानिवृत्तये ममात्मेत्याह ॥ ५ ॥

जरी माझ्या ठिकाणीं सर्व भूतें रहात असलीं तरी, भूमीवर राहणारे प्राणी ज्याप्रमाणें तिला स्पर्श करून असतात, तसा मला कोणीही स्पर्श करून असत नाहीं; याविषयीं सांगतातः—हे **अर्जुना**, हें माझें ईश्वरीय अचिंत्य स्वरूप पहा, मी विचित्र सामर्थ्यानें युक्त असल्यामुळें, जरी प्राणी माझा आश्रय करून राहिले आहेत तरी, ते मला स्पर्श करण्यास समर्थ होत नाहींत; ज्याप्रमाणें जीवाचा देह जीवापासून भिन्न असतो तसा सच्चित्स्वरूपी माझा देह भिन्न नसून अभिन्न असल्यामुळें, तो माझा देहच प्राण्यांला धारण करितो. तो स्वतंत्र असल्यानें सर्व प्राणिमात्रांचीं सृष्ट्यादिक करितो. ॥ ५ ॥

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

**असंगत्वेन परमात्मनोभूताधारत्वं दृष्टांतेनोपपादयति । यथेति । आकाशस्थितोपि वायुर्यथा स्पर्शादि नाप्नोति तथा मयिस्थितमपि जगदित्यर्थः ॥ ६ ॥**

असंगत्वानें सर्व भूतें परमात्म्याचा आश्रय करून असतात, याविषयीं दृष्टांत सांगतातः—ज्याप्रमाणें निरंतर सगळ्या आकाशांत चोहोंकडून वायु असतो, तथापि त्याच्यानें आकाशाला स्पर्श करवत नाहीं, त्याप्रमाणें सर्व भूतें माझा आश्रय करून असतात, परंतु, माझा स्पर्श त्यांना होत नाहीं; असें समज. ॥ ६ ॥

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**

**ज्ञानप्रदर्शनार्थं प्रलयादिकारणत्वं प्रपंचयति । सर्वभूतानीत्यादिना । कल्पक्षये प्रलयकाले सर्वभूतानि मदीयां त्रिगुणात्मिकां प्रकृतिं यांति तानि पुनः कल्पादौ विशेषेण सृजामि ॥ ७ ॥**

आपलें महात्म्य अर्जुनास समजावें ह्मणून प्रळयादिकांतेंही मीच करितों असें सांगतातः—हे कुंतिपुत्रा **अर्जुना**, प्रलयकाळीं सर्व प्राणिगण, माझ्याच

सत्तेनें माझ्या स्वाधीन असलेल्या प्रकृतींत जातात; आणि पुनः सर्वसृष्टि प्रारंभकाळीं मीच त्या प्राण्यांना उत्पन्न करितों. ॥ ७ ॥

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥**

नच प्रकृतिंविना सामर्थ्याभावइत्युक्तं । स्वामिति । तदुक्तम् । साधनानां साधनत्वं यदात्माधीनामिष्यते । तदा साधनसंपत्तिरैश्वर्यद्योतिका भवेदिति । प्रकृतेर्वशात् । मायावशत्वादेवावशं ॥ ८ ॥

प्रकृत्यादि साधनावांचून मी सृष्ट्यादिक करण्यास असमर्थ आहें, असें समजूं नये ह्मणून सांगतात—माझ्या स्वाधीन असलेल्या प्रकृतीस निमित्त करून मी आपल्या इच्छेनें, अस्वतंत्र अशा ब्रह्मरुद्रादि जीवगणाला पुनः पुनः उत्पन्न करितों; ज्याप्रमाणें राजादि श्रीमंत लोक आपल्या पायांनी चालण्यास समर्थ असतांही, हत्ती, घोडे, रथ इत्यादि वाहनांवर बसून, आपल्या इच्छेप्रमाणें क्रीडा करण्याकरितां जातां येतांनां, आपलें वैभव ( जगास ) दाखवितात, त्याप्रमाणें मी माझ्या इच्छेनेंच माझ्या स्वाधींन असलेलीं प्रकृत्यादि साधनें घेऊन, त्यांकडून सृष्ट्यादिक करवितों व यामुळें माझें जें अचिंत्य ऐश्वर्य तें मी ( जगास ) दाखवितों. परंतु, मी असा विचित्र शक्तिमान् आहें कीं, केवळ भिंवयी हालाविली असतांही, ब्रह्मांडाची उत्पत्ति, स्थिति आणि लय हीं कृत्यें करण्यास मी समर्थ आहे. ( हीं कृत्यें करावयास मला कोणाचें साह्य नको. ॥ ८ ॥

**न च मां तानि कर्माणि निबध्नन्ति धनंजय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

सकलजगत्कर्तारमपि मां न निबध्नन्ति । कुतः उदासीनवस्थितं । वस्तुतस्त्वनुदासीनं । वस्त्वर्थं सादृश्यं विवृणोति । असक्तमिति । यस्याशक्त्यैव सर्वकर्मशक्तिः कुतस्तस्य कर्मबंधइतिभावः ॥ ९ ॥

हे धनंजया, तीं सृष्ट्यादिक कर्में मी उदासीनाप्रमाणें असल्यामुळें, मला बद्ध करण्यास समर्थ होत नाहींत; जो परमात्मा मीं, अनायासें, त्यांच्या

त्यांच्या योग्यतेप्रमाणें त्या त्या भूतांची सृष्टि करितों, मग तीं कर्मे मला बद्ध करण्यास कशीं समर्थ होतील ? तर तीं मला कधींही बद्ध करीत नाहींत असें समज. ॥ ९ ॥

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥**
**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

जगत्प्रकृतिवशं त्वमुदासीनश्चेत् तर्हि प्रकृतेरेव स्वातंत्र्यं प्राप्तमित्यतआह । मयेति । अध्यक्षोद्रष्टाधिपतिर्वा । अध्यक्षोधिपतिःप्रोक्तोयदक्षाण्यस्यचोपरि इत्यभिधानात् अध्यक्षेण मया प्रयोजकेन प्रकृतिः सचराचरं सूयते जनयति। न केवलं प्रकृतिप्रसूतिद्रष्टृत्वं । किंतु अनेन हेतुना कर्त्रा जगद्विपरिवर्तते पुनः पुनर्जायते ॥ १० ॥

जर परमात्मा हा उदासीन असून, प्रकृतीच सृष्टि करिते तर ती प्रकृतीच स्वतंत्र आहे असें कां ह्मणूं नये ? याविषयीं सांगतातः—प्रकृती ही जगत्सर्जनाला ( जगदुत्पत्तीला ) उपयोगी आहे असें पाहून मी तिला सृष्टी करण्याविषयीं प्रेरणा केल्यानंतर ती हें चराचर जग, ज्याच्या त्याच्या योग्यतेप्रमाणें उत्पन्न करिते. हे अर्जुना, या कारणानेंच हें जग पुनः पुनः उत्पन्न होऊन नाश पावतें. या कृत्याला मी स्वेच्छेनुसार स्वतंत्र कर्ता आहें. इतर सर्व साधनेंही माझ्या सत्तेंतील आहेत, असें समज. ॥ १० ॥

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥**

यद्येवंविधोभगवान् तर्हि कथं केचित्त्वामवजानंति का च तेषां गतिरित्यतआह । अवजानंतीत्यादिना । मानुषीं मनुष्यसदृशीं मूढैर्मनुष्यसदृशत्वेन प्रतीयमानां नतु मनुष्यरूपां तनुमाश्रितं अनन्यत्वेपि विशेषशक्त्या व्यंजयंतं मामवजानंति । मूढास्तामसाः भूतं सर्वदा विद्यमानं महांतं व्यापीनमीश्वरं अनंतगुणं भावं यथार्थ्यमजानंतः अवज्ञानस्वरूपं प्रोक्तं ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता। प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता । धर्मदेहावतारादेर्भेददृष्टिश्च संकरः । अवतारेष्विति ज्ञेयमवज्ञानं जनार्दन इत्यादिना ॥ ११ ॥

अशा ( पूर्वी सांगितलेल्या ) महात्म्यानें तूं युक्त आहेस-तर तुला- कित्येक जाणत नाहींत, त्यांस गति तरी कोणती प्राप्त होते ? या शंकेचें समाधान करितात:—माझें रूप मूढजनांला मनुष्यासारखेंच दिसत असल्या- मुळें, माझी नित्य, अखिल, सच्छक्ति, चिन्मूर्ति पाहूनही, ते माझा अपमान करितात; तो असा कीं, सर्व काळीं व सर्व ठिकाणीं सर्व सद्गुणपूर्ण असें माझें जें अलौकिक स्वरूप, तें जाणत नसून, ते विपरीतच समजतात. ह्मणजे लक्ष्मीब्रह्मरुद्रादिकांबरोबर माझें साम्य मानितात; सर्व जीवगण हे परमात्म्या- पासून अभिन्न असून, त्या परमात्म्याचे स्वरूपांत दोष आहेत; परमात्म्याचीं स्वरूपें अपूर्ण आहेत; परमात्म्याचे गुण किंवा देह आणि रामकृष्णादि अव- तार हे परमात्म्यापासून निराळे आहेत, परमात्म्याचे ( वरील ) अवतार खरे असून ते खरे नाहींत असें ह्मणणें, आणि जीवांस त्या-( परमात्म्या- ) चे अवतार ह्मणणें, हेंच अज्ञान होय; याच विपरीत ज्ञानामुळें, माझा ईश्वरीय स्वभाव जाणत नसून, विनाकारण, मूढ लोक मला नित्य भिन्न अशा जीवाचें साम्य समजतात; परंतु जे सूज्ञ आहेत ते असें कधींही समजत नाहींत असें समज. ॥ ११ ॥

## मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
## राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

अवजानतांफलमाह । मोघाशाइति । वृथाशाः भगवद्द्वेषिभिरा- शासितमामुष्मिकं न किंचिदाप्यते । यज्ञादिकर्माणि च तेषां वृथेति मोघकर्माणः मोघज्ञानाः अन्येषामविद्यमानं मौढ्यमेव तेषां कुतोमौढ्येपि मिथ्याज्ञानं भवतु । प्रज्वलनात्मकोद्वेषस्तु तेषां कुतइत्याशंक्य तत्र- मूलकारणमाह । राक्षसीमिति । मोहिनीं बुद्धिभ्रंशकरीं राक्षसीमासुरीं च प्रकृतिं स्वभावमाश्रितास्तमोयोग्यामामवजानंति इति संबंधः । तानहं द्विषतः क्रूरानित्यादिना वक्ष्यमाणत्वात् । उक्तंच । सर्वमोघं शुभंतस्य योवजानाति केशवं । अधरं याति च तमः प्रादुर्भावगतो- प्यतः । ज्ञेयः केवलचिद्देहोविदोषः पूर्णसद्गुणइति । तथा । कर्मणा मनसा वाचा योद्विष्याद्विष्णुमव्ययं । मज्जंति पितरस्तस्य नरके शाश्वतीः

समाः । तथा च । योद्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिं । कथं स न भवेद्द्वेष्य आलोकांतस्य कस्यचिदित्यादि । द्वेषाच्चैद्यादयोनृपाइत्यादि भगवतोभक्ताप्रियत्वज्ञापनार्थं नित्यध्यानस्तुत्यर्थं चेत्यवगंतव्यम् ॥१२॥

असे जे विपरीत ज्ञानी त्यांस कोणतें फळ मिळतें तें सांगतातः—भगवंताचा द्वेष केला असतां त्यांच्या सर्व इच्छा निष्फळ होतात; त्यांचीं कर्मं ज्ञान व बुद्धि हीं चांगलें फळ देणारीं न होतां, तीं व्यर्थ जातात. याप्रमाणें भगवंताचा द्वेष करण्याचें कारण असें आहे कीं, बुद्धीला भ्रंश करणारीं हिंसादिक कर्में केल्यानें त्यांचा स्वभाव आसुरी होतो; असे जे असुर स्वभावाचे ते तमोयोग्यच जाणावे. सर्व जगाचा स्वामी व सर्वोत्तम असा जो श्रीहरी त्याला जीवाभेदादिक अज्ञानानें जाणतात ते ज्यांत नित्यदुःख आहे अशा अंधतमास ( नरका ) प्रत जातात. किंवा कर्मानें व मनानें जे विष्णूचा द्वेष करितात त्यांचे पितर सुद्धां नरकांत जातात. ( मग ते द्वेषी जातीलच ) जो श्री नारायणाचा द्वेष करितो, तो सर्व जगाचा द्वेष करितो असें जाणावें. असें असतां द्वेष केल्यानेंच शिशुपालादिकांस मुक्ति प्राप्त झाली असें श्रीमद्भागवतांत कसें वर्णिलें आहे; तर, त्या शिशुपालादिकांच्या अंतर्गत भक्ति होती; अथवा ते पूर्वी श्रीहरीचे पार्षद असल्यानें त्या श्रीहरीला ते प्रिय होते. ( ते शिशुपालादिकांचे रूपानें उत्पन्न होऊन ) त्यांनीं लौकिकांत मात्र श्रीहरीचा द्वेष केला असें दिसलें. ह्मणूनच श्रीहरीनें त्यांस मुक्त केलें. कारण ते जर खरोखरच भगवंताचा द्वेष करणारे असते तर, देव व जीव एकच समजणाऱ्या वेनानामक असुराप्रमाणें त्यांस नित्यदुःखात्मक अशा नरकाची प्राप्ति झाली असती. ॥ १२ ॥

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥**

भगवतोद्वेष्यत्वादेवावजानंतीति किंनस्यादित्यतस्तथात्वे देवप्रकृतयोप्यवज्ञां कुर्युः नच तदस्तीत्याह । महात्मानइति । महापुरुषाः दैवं स्वभावमाश्रिताः अनन्यचित्ताः मां भूतादिमव्ययं ज्ञात्वा भजंति १३

श्री भगवान् हा सर्व लोकांनीं द्वेष करण्यास योग्य आहे ह्मणून

त्याचा द्वेष करतात असें समजूं नये; कारण जे तमोयोग्य असे असुरगण ( आसुरीस्वभावाचे लोक ) त्यांशिवाय, उत्तम अशा देवस्वभावाचे लोक परमात्म्याचा द्वेष करीत नाहींत, याविषयीं सांगतातः–हे अर्जुना, कामक्रोधादिकांमुळें ज्यांचें चित्त मोहित झालें नाहीं, असे देवस्वभावानें युक्त जे आहेत, ते इतर सर्व विषयांच्या इच्छेचा त्याग करून, जगताला कारण, सर्वदा नाशादि दोषांनीं रहित, असा जो मीं त्या मला जाणून, ते माझ्याच भजनांत रत होतात. ज्याप्रमाणें चांगला ( देव ) स्वभाव हा परमेश्वराचे भक्तीला कारण आहे, त्या प्रमाणेंच वाईट ( असुरी ) स्वभावच परमेश्वराचा द्वेष करण्याला कारण होतो. सात्विक ( सत्वगुणविशिष्ट ) जे लोक असतात ते जगाला मुख्य कारण जो श्रीहरी नारायण, त्याचा कधींही द्वेष करीत नाहींत. ॥ १३ ॥

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥**

भजनप्रकारमाह । सततमित्यादिना । केचिद्दृढनियमाः । नामोच्चारणं कुर्वंतोभक्त्या मामुपासते ॥ १४ ॥

भजनाचे प्रकार सांगतातः–कित्येक लोक सावधानपणानें स्तोत्रमंत्रादिकांचें पारायण करून, माझी भक्तिपूर्वक उपासना करितात; कित्येक परमेश्वरच या दुस्तर अशा संसारसागरांतून पार नेणारा आहे असें समजून, इंद्रियनिग्रहादि दृढव्रतें करून, मला शरण येऊन, माझी सेवा करितात; आणि कित्येक नमस्कार प्रदक्षिणादिकें करून माझी उपासना करितात. ॥ १४ ॥

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥**

अन्ये ज्ञानाख्येन यज्ञेन यजंतः सर्वत्रैकएव नारायणः स्थितइत्येकत्वेन पृथक्त्वेन सर्वतो वैलक्षण्येन बहुधा शुक्लकृष्णादिबहुरूपत्वेन दैवमेवापरेयज्ञमित्युक्तप्रकारेण बहवोवा बहुधा भूत्वा विश्वतोमुखं संतं मामुपासते । उक्तंच । सएव दशधाप्रोक्तो विष्णुर्मत्स्यादिरूपकः ।

शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः । परादिरूपोबहुधा सोनंतात्मा जितादिकः । तथाच । एकमूर्तिश्चतुर्मूर्तिं रथवा पंचमूर्तिकः । द्वादशादिप्रभेदोवा पूज्यते सज्जनैर्हरिरित्युक्तप्रकारेणैवोपास्यते ॥१५॥

कित्येक ज्ञानरूप यज्ञानें माझी पूजा करितात; कित्येक, सर्वव्यापी जो परमात्मा आणि त्याचे अभिन्नांश जे रामकृष्णादि अवतार, ते एकच आहेत असें समजून, उपासना करितात; कांहीं लोक, ब्रह्मरुद्रादि जीव जडात्मक प्रपंच वैलक्षण्यानें मला जाणून, माझी उपासना करितात, किंवा मी अनेक अवतार घेणारा आहें असें समजून माझी उपासना करितात; परमात्म्याचीं (माझीं) रूपें अनेक आहेत तीं अशीं कीं:—मत्स्यादि दहा अवतार रूपें; नारायणादि शंभर रूपें; विश्वादिक सहस्र रूपें; आणि वासुदेवादिक चार रूपें; याप्रमाणें अनंत रूपी परमात्म्यास, ते (उपासक) त्यांच्या त्यांच्या योग्यतेप्रमाणें समजतात. ॥ १५ ॥

**अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥**

प्रतिज्ञातं विज्ञानमाह । अहंक्रतुरित्यादिना । दीक्षाद्यवभृथांताः क्रतवोग्निषोमादयः यज्ञोदेवतोद्देशेन द्रव्यत्यागः ॥ १६ ॥

प्रतिज्ञात विज्ञानाचें विस्तारानें वर्णन करितातः—यज्ञाभिमानी देवता; व पितरांच्या उद्देशानें देण्याचें जें अन्न किंवा तदभिमानी देवता; औषधी किंवा तदभिमानी देव; होमसाधन मंत्र व आज्यादिक, अग्नि किंवा हवनादिक हीं सर्व सदोदित माझ्या सत्तेंत असतात. ॥ १६ ॥

**पिताहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च ॥ १७ ॥**

पितामहः पूज्यः ॥ १७ ॥

या जगाला कारण जो पिता तो मीच; त्या प्रमाणेंच (जगास) मातृस्थानीं असलेली जगदंबा महालक्ष्मी माझ्याच स्वाधीन आहे. माझ्या आज्ञेनें कर्माचें फळ देणारा जो ब्रह्मदेव, तोही माझ्याच स्वाधीन आहे. वेद्य

( जाणण्यास योग्य ) व भगवद्वाचक संसाररूपी वज्रापासून रक्षण करणारा ॐकार, ऋग्वेद, यजुर्वेद, आणि सामवेद हे सर्व माझें तत्त्व प्रतिपादन करणारे असून, ते माझ्याच स्वाधीन आहेत. ॥ १७ ॥

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥१८॥**

गम्यतेऽवगम्यते मुमुक्षुभिः इति गतिः भरणाद्भर्ता प्रभुः । समर्थः साक्षादीक्षतइति साक्षी निवासः आश्रयः संसारभीतरक्षणाच्छरणं सुहृत् प्रभवत्यस्मादिति प्रभवः । प्रलयकाले प्रलीयतेऽस्मिन्निति प्रलयः । तिष्ठत्यस्मिन्निति स्थानम् । संहार काले प्रकृत्या जगदत्रनिधीयतइति निधानं अव्ययं बीजं जगद्व्यक्तिकारणं ॥ १८ ॥

मोक्षाची इच्छा करणारांनीं जाणण्यास योग्य, ब्रह्मरुद्रादि सर्व जगाचा पोषक, निखिल जगत्परिद्रष्टा, सर्व जगदाश्रयस्थान, मुक्तजनांचें शरणस्थान, अति संतोषकारक, ज्यांच्या त्यांच्या योग्यतेप्रमाणें सर्वांची उत्पत्ति व संहार करणारा, नाशादि दोषरहित, सर्व जगाला आदिकारण, नित्य, निस्सीम, विचित्रशक्तिमान्, असा मीच असून माझ्याच स्वाधीन हें चराचरात्मक जग आहे. १८

**तपाम्यहमहं वर्षं निगृण्हाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥**

वृष्टिं आकर्षामि प्रलयकालादन्यत्र मरणान्मृत्युः सत्कार्यं असत्कारणं सदभिव्यक्तरूपत्वात्कार्यमित्युच्यते बुधैः । असदव्यक्तरूपत्वात्कारणं चापि शब्दितंइत्यभिधानात् इतरत्प्रसिद्धं अहंक्रतुरित्यादिरसोहमित्यादिवद्व्याख्येयं ॥ १९ ॥

हे अर्जुना, सूर्यांतर्गत राहून ग्रीष्मकाळीं जगाला तापविणारा मीच आहें. एखाद्या वेळीं वृष्टीचें आकर्षण करणारा व कचित्काळीं वृष्टि देणारा मीच; हे सर्व लोक माझ्याच आश्रयानें वांचतात; आणि त्यांस तत्तत्काळीं मरण देणाराही मीच होय. प्रळयकाळींही सर्वांचा नाश करणारा मीच असून, मध्यंतरीं प्रलयकाळाशिवाय इतर वेळीं नाश करण्याची शक्तीही मलाच आहे.

सत् ह्मणजे कार्य असत् ह्मणजे कारण हीं सर्व कार्यें माझ्याच स्वाधीन आहेत असें समज. ॥ १९ ॥

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ॥
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ २० ॥

तवयदशेषक्रत्वादिभोक्तृत्वं तन्नोपपद्यते । त्रैविद्यभागवतयोः फलभेदाभावप्रसंगादित्यतआह । त्रैविद्याइत्यादिना । तिस्रऋगाद्याविद्या अधीयंतइति त्रैविद्याः सोमं पिबंतीति सोमपाः यज्ञैर्मामिष्ट्वा यज्ञादि-कर्मंते मयि समर्प्य स्वर्गतिं प्रार्थयंते ते पुण्यं सुरेंद्रस्य लोकं आसाद्य दिवि दिव्यानुत्तमान् देवानां भोगानश्नंति ॥ २० ॥

जें तुला अशेषक्रतुभोक्तृत्व सांगितलें तें घडत नाहीं; कारण, जे भगवद्भक्त, नित्यसुखात्मक अशा मुक्तीला साधन जो परम ( श्रेष्ठ ) वैष्णवधर्म आचरण करतात त्यांना मिळणारें सुख, आणि त्रैविद्यासक्त ह्मणजे वेद-विहित कर्म करणारे जे त्यांना मिळावयाचें सुख, यांत भेद राहणार नाहीं. सर्व यज्ञभोक्तृत्व तुझे ठिकाणीं असल्यामुळें उभयतांस एक प्रकारें सुख मिळावें लागेल तसें होत नाहीं. उभयतांस भिन्नभिन्नच फल प्राप्त होतें, त्यामुळें तुला सर्व यज्ञभोक्तृत्व कसें? अशी ( तुला ) शंका येईल तर सांगतोंः— वेदत्रयोक्त कर्मांच्या ठिकाणीं आसक्ति ठेवून, तें ( वेदविहित ) कर्म करून, माझें यजन करणारे व यज्ञावशिष्ट सोमवल्लीचा रस प्राशन करून, पापरहित होऊन आह्मांला स्वर्गप्राप्ति व्हावी अशा हेतूनें माझी प्रार्थना करितात ते, पुण्याचें फळ जो स्वर्गलोक तेथें जाऊन, देवांनीं भोगण्यास योग्य असे भोग भोगितात. ॥ २० ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१ ॥

ते स्वर्गकामाः तं प्रार्थितं विपुलं स्वर्गलोकं तत्सुखं भुक्त्वा भोगप्रेरके पुण्ये क्षीणेसति मर्त्यलोके विशंति पुनरप्येवमेव वेदैर्विहितं धर्म मनुसृताः कामान् भोगान् कामयमानाः गमनागमनं लभंते ॥२१॥

ते स्वर्गांत गेलेले मनुष्य अतिशय सुख देणारे असे स्वर्गांतले भोग भोगून, ज्यामुळें भोगाची प्राप्ति झाली तें पुण्य संपलें असतां, राहिलेल्या कर्माच्यायोगानें, मृत्युलोकीं पुनः जन्म घेतात; आणि पुनरपि वेदविहित कर्मांपासून प्राप्त होणारें जें स्वर्गसुख त्या सुखाचें स्मरण करून, त्याच विषयांच्या इच्छेनें तेच धर्म आचरून, वारंवार भूमीवर जन्म पावतात व स्वर्गास जातात. ॥ २१ ॥

## अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
## तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥

येतु भागवताजनाः अनन्याः अन्यफलकामनां प्राधान्येनान्यदेवतापूजनं च तद्रहिताः मां चिंतयंतः निरंतरं ध्यायंतः परित उपासते सम्यक् गुणगणज्ञानादुपासापर्युपासनेत्युक्तेः । तेषां नित्यमभितः सर्वतः वाङ्मनः कायैर्भगवत्सेवायुक्तानां योगक्षेमं अपुनरावृत्तिलक्षणं पुरुषार्थं प्रापयामि । उक्तंच । त्रैविद्यस्त्वपरोधर्मोनानादैवतपूजनं । तत्रापिविष्णुर्ज्ञातव्यः सर्वेभ्योप्याधिकोगुणैः । समर्पयति यज्ञाद्यमंततस्त्वेव विष्णवे । त्रैविद्यधर्मापुरुषः स्वर्गं भुक्त्वा निवर्तते । सम्यक् तत्वापरिज्ञानादन्यकर्मकृतेरपि । स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् । सदाविष्णोरस्मरणात् त्रैविद्योनाप्नुयात्परं । अनन्यदेवतायागाद्भक्त्युद्रेकादकामनात् । सदायोगाच्च वैशिष्ट्यं त्रैविद्याद्वैष्णवादपि । स्याद्धिभागवतस्यैव तेन ब्रह्मादयोखिलाः । अश्वमेधादिभिर्यज्ञैरपि केशव याजिनः । वैष्णवाइतिबुद्ध्यैव मानयंत्यन्यदेवताः । सर्वदेववरत्वेन ये न जानंति केशवम् । तेषां पुण्यानि मोघानि यांति चांधं तमोध्रुवमित्यादि ॥ २२ ॥

अन्य विषयवासनारहित चित्तानें माझ्यावांचून इतर देवगणांची सर्वोत्तमत्वानें गणना न करितां, जे माझ्या गुणांच्या गायनानें किंवा केवळ माझ्या

ध्यानरूप उपासनेनें माझीच सेवा करितात, ते निरंतर सर्व देश, सर्व कर्में व सर्व इंद्रियें हीं माझ्याच स्वाधीन आहेत असें समजून, अंतःकरणापासून माझी सेवा करण्यांत रत झालेले आहेत, त्यांचा योगक्षेम मीच चालवितों; आणि त्यांचीं प्रारब्धकर्में भोगावयाचीं संपलीं ह्मणजे त्यांस, जिला पुनरावृत्ति नाहीं अशी मुक्ति मींच देतों, असें समज. मुख्य तात्पर्य हेंच कीं, त्रैविद्य नामक जो अनेक देवतांची पूजारूप धर्म, तो परम ( श्रेष्ठ ) वैष्णवधर्मापेक्षां कनिष्ठ होय. जरी त्या त्रैविद्यांनी यज्ञयागादि आचरिले तरी, त्या यज्ञादिकांत राहणारा, सर्व रमाब्रह्मरुद्रादि जीवजडादि प्रपंचविलक्षण अशा श्रीहरी नारायणाचें स्मरण केलें तरच त्या त्रैविद्यांला स्वर्गादिकांचें सुख मिळतें; परंतु, नित्य सुखप्राप्तीचें साधन सर्वोत्तम श्रीहरी होय असें निश्चित ज्ञान त्यांस नसून, ते, वैष्णवधर्मेतर जीं यज्ञयागादिक कर्में त्यांत रत होतात, आणि स्वर्गादि सुखांची इच्छा करितात. त्यांचे रागादिक दोष गेले नसल्यानें भगवंताचें स्मरणही ते निरंतर करीत नाहींत; यामुळेंच ते त्रैविद्य जिला पुनरावृत्ति नाहीं अशा मुक्तीस जात नाहींत, तर ज्याला नाश आहे अशा स्वर्गादिलोकास जातात. जे विष्णुभक्त आहेत ते श्रीहरीपेक्षां इतर देवसमुदाय कनिष्ठ मानून, त्या परमात्म्याचें ध्यान करितात. विषयवासनारहित झालेल्या बुद्धीनें, त्यांचा भक्तियोग निरंतर वृद्धिंगत होऊन, श्रीहरिस्मरण सर्वदा करतात. यावरून त्रैविद्यापेक्षां विष्णुभक्त श्रेष्ठ झाल्यानें, ते, ज्यामध्यें नित्यसुख आहे व जिला पुनरावृत्ति नाहीं अशा मुक्तीस जातात. जे अश्वमेधादि यज्ञ करून श्रीविष्णूला अर्पण करितात, ते कर्मनिष्ठ वैष्णव आहेत असें समजूनच स्वर्गादि लोकांत देव त्यांचा सन्मान करितात. जे मंदमति, सर्व देवांत श्रीहरीच उत्तम आहे असें जाणत नाहींत, त्यांनीं केलेलीं पुण्यें निष्फळ होऊन उलट ते अंधतम नामक नित्य दुःख देणाऱ्या नरकांत जातात ॥ २२ ॥

**येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥**

भगवद्भोगनिमित्तत्वात्फलस्य भगवतः सर्वत्र साम्यात्सर्वेषां-फलसाम्येन भाव्यं। तदभावेचाहं क्रतुरित्यादिनोक्तं सर्वत्रभगवतो-

भोक्तृत्वमपि नस्यादित्याशंकामपनुदन्नुक्तमेव प्रपंचयति । येपीत्यादिना ॥ २३ ॥

भगवान् हा सर्वत्र सारखा आहे व जें फळ मिळावयाचें तें भगवद्भोगनिमित्तक आहे असें असल्यानें जर तो भगवान् त्रैविद्यांनीं केलेल्या यज्ञाच्या फळाचा भोक्ता आहे, तर, वैष्णव धर्मांत निरत असलेल्या लोकांस जें अपुनरावृत्तिरूप मुक्तिसुख मिळतें, तेंच सुख त्रैविद्यांलाही मिळणें अवश्य आहे; तें जर त्यांना मिळत नाहीं तर त्रैविद्यांनीं केलेल्या कर्मांचा परमात्मा उपभोग घेत नाहीं असें ह्मणावें लागेल; या शंकेच्या निरसनार्थ पूर्वींचाच अर्थ स्पष्टपणें सांगतातः—हे कुंतिपुत्रा अर्जुना, जे लोक भक्तियुक्त होऊन, इंद्रादि देवतांच्या उद्देशानें यज्ञादिक कर्में करितात, तीं मला उद्देशून केलेलीं नसल्यामुळें विधियुक्त होत नाहींत; याकरितांच त्यांस त्या कर्मानें नित्यसुखात्मक मुक्ति मिळत नाहीं. ॥ २३ ॥

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥**

त्रैविद्यादि कृतानामपि यज्ञानां भगवद्भोक्तृत्वादविधिपूर्वकत्वे किंकारणमित्यतआह । अहंहीति । मामिष्ट्वा प्रार्थयंते इत्युक्तत्वात् जानंतोपि तत्त्वेन नाभितो जानंति । अतश्चयवंति प्रच्यवंते सर्वप्रकारेणाज्ञानिनां मिथ्याज्ञानिनांचानर्थप्राप्तिरेव न स्वर्गाच्च्यवनमात्रं । उक्तंच । सर्वदेववरत्वेनेत्यादिनापूर्वोक्तत्वात् । अतःसर्वाधिक्यं विष्णोर्ज्ञात्वापि ब्रह्मरुद्रादीनां तत्परिवारत्वमजानतामिदं फलम् ॥ २४ ॥

त्रैविद्यांनीं केलेलीं यज्ञादि कर्में, जरी इंद्रादि देवतांनां उद्देशून केलेलीं असलीं तरी, त्यांच्या फलांचा भोक्ता श्रीहरीच असल्यानें तीं कृत्यें विधियुक्त कां होत नाहींत ? या शंकेचें समाधान कारितातः—इंद्रादिकांचे उद्देशानें केलेल्या यज्ञाचें फळही, त्या इंद्रादिकांचे अंतर्यामी मीच असून, त्याचा फलभोक्ता मीच असल्यानें कर्मकर्त्यांस इंद्रादिकांचे द्वारें फल देणारा असा स्वतंत्र प्रभु मीच आहें, हें ज्ञान सामान्यतः त्रैविद्यांला असलें तरी, लक्ष्मी व ब्रह्मरुद्रादि देवतागण हे माझे सेवक आहेत, असें ज्ञान त्यांस नसल्यामुळें, ते

